श्रीः



# वेदान्तसिद्धान्तसारसंग्रहस्य

## शुद्धाशुद्धपत्रम्।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| प्रमाणून्तर | प्रमानन्तरं | ७ | १३ |
| ननुकाकात्र | ननुकात्र | ९ | ११ |
| निर्दिष्टं | निर्दुष्टं | २१ | ९ |
| प्रमाश्रयत्वे | प्रमाश्रयत्वं | २६ | २ |
| वुद्धयादि | बुद्धयादि | २७ | ५ |
| स्वात्माज्ञाना | स्वात्मज्ञाना | २८ | २ |
| च्छांस्त्रमेव | च्छास्त्रमेव | २९ | २ |
| श्रुतेरनाधि | श्रुतेः । अनाधि | ३७ | १३ |
| अग्रणीः | अग्राणि | ४४ | ७ |
| साभास | साभासं | ४४ | ७ |
| अवस्थायत्रपञ्चकोशे | अवस्थात्रय | ४७ | ६ |
| लक्षणावेति | लक्षणैवेति | ५० | ४० |
| वाचस्पति | वाचस्पति | ५२ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| लक्षण | लक्षणा | ६१ | ६ |
| ननु | नतु | ६९ | ६ |
| मभ्यकुर्य्युः | मस्यकुर्य्युः | ७१ | १० |
| तत्रेन्यनु | तत्रेत्यनु | ७४ | ११ |
| शब्दस्तुस्तत्र | शब्दस्तुतत्र | ७९ | ७ |
| योगा | योगो | ८६ | ३ |
| प्रतिपात्तेः | प्रतिपत्तिः | ९१ | १२ |
| आत्मन अखण्डा | आत्मनोऽखण्डा | ९१ | ३ |
| धीरस्यजिज्ञा | धीरस्त्यजिज्ञा | ९२ | १२ |
| आत्मनिधीयः | आत्मानिगीः | ९४ | ६ |
| स्वरूपबे | स्वरूपंवे | ९८ | १३ |
| भवता | भगवता | १०१ | ४ |
| आत्मनअज्ञा | आत्मनोऽज्ञा | १०३ | १२ |
| तत्सङ्गेन | सत्सङ्गेन | १०२ | ७ |
| अन्यद्दृष्ठा | अन्यदृष्टा | १०४ | ६ |
| ज्ञाना | ध्याना | १०६ | ४ |
| गुर्वंगना | गुर्वंगनां | १११ | १२ |
| ततज्ञानं | तज्ज्ञानं | १२० | १० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वृत्तिंज्ञानस्य | वृत्तिज्ञानस्य | १२४ | ४ |
| कत्वंमिति | कत्वमिति | १२४ | ७ |
| वृत्ते | नवृत्ते | १२७ | ९ |
| ज्ञानाने | ज्ञानानि | १३१ | १० |
| यस्तु | यस्यतु | १४३ | ११ |
| दंदहती | दंदहीतीति | १४४ | १ |
| क्षाणिकत्वा | क्षणिकत्वा | १४७ | १० |
| प्राणे | प्राणो | १५१ | ६ |
| अथएव | अतएव | १६१ | १२ |
| तिष्ठेद्वृत्तिं | तिष्ठेधिवृत्तिं | १६१ | १० |
| त्यादीनि | त्यादिनि | १६३ | ६ |



श्री-

# वेदान्तसिद्धान्तसारसंग्रहस्य

## सूचीपत्रम्

### अथ प्रथमप्रकरणम्

इति प्रथमप्रकरणम्.

इति द्वितीयप्रकरणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| विषयः | पृष्ठाङ्कः | पङ्क्त्यङ्कः |
|---|---|---|

## अथ तृतीयप्रकरणम्।



इतितृतीयप्रकरणम्.

T.

हरिः ओ३म् तत्सत् ।

श्रीगणेशायनमः ॥

अथ-

# वेदान्तसिद्धान्तसारसंग्रह-

प्रारम्भः ।



ईश्वरोगुरुरात्मेति मूर्त्तिभेदविभागिने । व्योमवद्व्याप्तदेहाय दक्षिणामूर्त्तये नमः ॥ १ ॥ अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥२॥ अज्ञान तिमिरान्धस्य ज्ञानाञ्जनशलाकया चक्षुरुन्मीलितं येन तस्मै सद्गुरवे नमः ॥ ३ ॥ अज्ञानतत्कार्यतदीयभे-

दानध्यक्षयन्ती निजसत्तयैव। स्मर्तुं च विस्मर्तुमहो न शक्या सुप्त्यादिषु स्वप्रभया स्मि साचित् ॥ ४ ॥ अथ संसारादुद्विग्नचित्तानामतिगम्भीरार्थ-शारीरकमीमांसाविचारासमर्थानां मुमुक्षूणां तपोयज्ञदानादिभिः शुद्धान्तःकरणानां साधनचतुष्टयसम्पन्नानां हितार्थायवेदान्तसिद्धान्तसारसंग्रहनामकंप्रकरणमारभ्यते ॥ अस्मिन्प्रकरणे अध्यारोपापवादमुक्तिविवेकनामभिः प्रकरणत्रयम् ॥ २ ॥ तैरेव सर्ववेदान्तार्थनिरूपणम् ॥ तथा चोक्तं ॥ अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥

शिष्याणां सुखबोधार्थं तत्वज्ञैः कल्पितः क्रमः ॥ १॥ साधनचतुष्टयं तु ॥ नित्यानित्यवस्तुविवेकः ॥ १ ॥ इहाऽमुत्रार्थफलभोगविरागः ॥ २ ॥ शमादिषट्सम्पत्तिः ॥ ३ ॥ मुमुक्षुत्वं चेति ॥ ४ ॥ तथाच श्रुतिः । शान्तोदान्तउपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानं पश्यतीति ॥ शान्तः, मलिनवासनारहितः ॥ दान्तः जितबाहिरिन्द्रियः॥ वशे हि यस्येन्द्रियाणि तस्य प्रज्ञाप्रतिष्ठितेति भगवतोक्तेः ॥ उपरतस्सन्यासी ॥ त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणां श्रुत्येहविहितोयस्मात्तत्त्यागी प-

१ श्रुत्याविधीयते इत्यापिपाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तितोभवेदित्युक्तम् ॥ अन्यस्मृतिरपि॥ नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना वर्तमानस्तु संन्यासी पतत्येव न संशय इति, वेदांतविचारस्य संन्यासिनां मुख्यत्वात्॥ तितिक्षुःद्वंद्वसहिष्णुःतथाचार्य्यवाक्यंसहनंसर्वदुःखानामप्रती कारपूर्वकं॥चिन्ताविलापराहितं सा तितिक्षानिगद्यतेइति॥चिन्ताविलापसंयुक्तस्य तु वरविघाताय कन्योद्वाहेति न्यायआपतेत् ॥ समाहितः ॥ अनन्यव्यापारतया प्रत्यक् प्रवणचित्तः सन् आत्मनि अन्तःकरणे आत्मानं प्रत्यगभिन्न कूटस्थचैतन्यं पश्येदित्यर्थः ॥ अथा-

ऽध्यासनिरूपणम् ॥ अयमेव वस्तुन्यवस्त्वारोपोऽध्यारोपः॥शारीरकभाष्ये। आदावध्यासखण्डनं कृत्वापश्चात्तत्समाधानं कृतं ॥ पूर्वपक्षः ॥ युष्मदस्मत्प्रत्ययगोचरयोर्विषय विषयिणोस्तमः प्रकाशवद्विरुद्धस्वभावयो रितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपिसुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरेस्य विषयिणि तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासोमिथ्येति भवितुं युक्तम् ॥अस्यार्थः॥अत्र लाक्षणिकत्वान्नत्वममादेशः॥प्रतीयतइति प्रत्ययोऽहं-

कारादिरनात्मा दृश्यतया भाति।आत्मातुप्रतीतित्वात्प्रत्ययःस्वप्रकाशतया भाति गोचरपदेन व्यवहारतोविरोधउक्तः॥युष्मदर्थः प्रत्यगात्मतिरस्कारेण कर्त्ताहामित्यादिव्यवहारगोचरः। अस्मदर्थस्त्वनात्मविलापेनाऽहंब्रह्मेति व्यवहारगोचरइति विरोधउक्तः॥युष्मच्चास्मच्च युष्मदस्मदीते एव प्रत्ययौ च तौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ तयोर्विरुद्धयोरितरेतरभावोनामात्यन्ताऽभेदः तादात्म्यं वा तदनुपपत्तौ सिद्धायामित्यन्वयः॥ विषयविषयिणोरिति चिज्जडयोर्विषयविष-

यित्वात् दीपघटयोरिव न तादात्म्य मिति भावः ॥ तद्धर्म्माणामिति तयो-रात्मानात्मनोर्धर्मास्तद्धर्म्मास्तेषामपि इतरेतरभावानुपपत्तिः ॥ इत्यतइति इत्युक्तरीत्या तादात्म्याद्यभावेन तत्प्र-मायाअभावादतः प्रमाजन्यसंस्कार-स्याध्यासहेतोरभावादध्यासोमिथ्येति भवितुं युक्तम् । इत्यन्वयः पूर्वप्रमाज-न्यसंस्कारसादृश्यादिरूपाध्याससा-मग्र्यभावात् ॥ अधिष्ठानसामा-न्यां शस्याऽऽरोप्येण तादात्म्यप्रमा जन्य संस्कारोऽध्यासहेतुः॥ इदं रजत मिति प्रमानन्तर शुक्ताविदं रजतमि

त्यध्यासात् ॥ तथा च विज्ञानघने प्रत्यगात्मनि अन्तः करणाद्यनात्माध्यासो न संभवति हेत्वभावात् ॥ तथाहि आत्माऽनात्मानौ तादात्म्य शून्यौविरुद्धत्वात्तमःप्रकाशवत् इत्यनुमानात् । अत्र तमः प्रकाशयोस्तादात्म्याभाव उक्तः न तुसहावस्थानं तस्य मन्दांधकारे सत्वात् ॥ न व्यभिचारिहेतुरिति एवं च निरवयवनिर्गुणस्य स्वप्रकाशात्मनि गुणावयवसादृश्यस्य चाज्ञानस्य चाऽयोगादिति पूर्वपक्षः ॥ अयं भावः ॥ बंधस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासंभवात् ॥ बद्धमुक्तयो-

जीवब्रह्मणोरैक्यायोगे न विषयासम्भवात् । शास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्य्यम् ॥ अथ समाधानम् ॥ तथाहि । किमध्यासस्य नास्तित्वम् ॥ अयुक्तत्वादभानाद्वा कारणाभावाद्वा॥आद्यपक्षइष्टः कथम्। अध्यासस्याऽसंगस्वप्रकाशात्मन्ययुक्तत्वमलंकारोऽस्माकमिति भावः ॥ परंतु लोकव्यवहारतया प्रत्यक्षत्वात् सामग्रीसद्भावाच्चास्त्यध्यासः ॥ ननु कात्र सामग्री। अविद्यैव। अविद्यायाः किं लक्षणं किं तत्र प्रमाणमिति चेदुच्यते ॥ अनाद्युपादानत्वे सति ज्ञान-

निवर्त्त्यमज्ञानम् ॥ अविद्यामायाऽज्ञानं चेत्यादयः पर्यायवाचकशब्दाः । मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ॥ इन्द्रोमायाभिः पुरुरूपईयते इत्यादि श्रुतयः प्रमाणम् ॥ स्मृतिरपि अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जंतवइति ॥ तस्याः किं स्वरूपमिति चेदुच्यते ॥ सदसद्भ्यामनिर्वचनीयम् ॥ तथा च भाष्यकारा आहुः ॥ अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका परा ॥ कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ॥ ११० सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्य-

भिन्नाप्युभयात्मिकानो ॥ सांगाप्य नंगाह्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा ॥ ११० ॥ शुद्धाद्वयब्रह्मविबोधनाश्या सर्पभ्रमोरज्जुविवेकतोयथा । रजस्तमः सत्व मिति प्रसिद्धागुणास्तदीयाः प्रथितैःस्व कार्यैरिति ॥ अत्रानादीति प्रवाहरूपेणाऽनादिस्वरूपतोनाप्यादिर्नाप्यनादिरित्यनिर्वचनीयैवेति। अनादित्वे सति ब्रह्मवन्निवृत्त्य योगात्सादित्वे सति कालनियमापेक्षास्यादिति सिद्धम्॥ ननु तदज्ञानम्भावरूपमभाव रूपं वेति चेन्नापि भावरूपं नाप्य-

भावरूपं किं त्वनिर्वचनीयमेवेति तथापि व्यवहारकाले प्रतीतिस्त्वात्। ब्रह्मज्ञानान्निवर्त्यत्वाच्च भावरूपं यत्किंचिदिति वदामः तथा चोक्तं संक्षेपशारीरके ॥ नाभावतास्य घटते वरणात्मकत्वान्नाभावमावरणमाहुरभावशौण्डाः ॥ अज्ञानमावरणमाह च वासुदेवस्तद्भावरूपमिति तेन वयं प्रतीमः ॥ ३२० ॥ एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् येनावृतः कुरुते सम्प्रमत्तो घोराणि कर्माणि सुदुस्तराणि॥ इति, व्यासवचनम् ॥ वर्णात्मकत्वादाच्छादक-

त्वात्॥अस्याऽज्ञानस्याभाववशौण्डाः॥
अभावपदार्थनिरूपणे समर्थावैशेषि-
कादयः॥ आवरणमभावं तेपि नाहुः॥
तथा चाऽज्ञानस्यावरणात्मकत्वमाह
वासुदेवः गीतायां ॥ अज्ञानेनावृतं
ज्ञानं तेन मुह्यन्ति जन्तव इति ॥ प्र-
कृतमनुसरामः ॥ तादृक् कारणे सिद्धे
सत्यध्याससिद्धिरिति ॥ तथा समा-
धानभाष्यम् ॥ तथाप्यन्योऽन्यस्मि-
न्नन्योऽन्यात्मकतामन्योऽन्यधर्मांश्चा
ध्यस्येतरेतराऽविवेकेनात्यन्त विविक्त-
योर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः ॥
सत्याऽनृते मिथुनीकृत्याऽहमिदं म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेदमितिनैसर्गिकोऽयं लोकव्यवहारः।२
अस्यार्थः। युक्तग्रहणादपि पूर्वपक्षस्य
दुर्बलत्वं सूचयति तथापीति॥ अध्या-
साऽयुक्तता इष्टैवेति॥ व्यवहारतः सा-
धयति अन्यमिति॥ अज्ञः कर्त्ता मनु-
ष्योऽहमितिप्रत्यक्षाऽनुभवादध्यास-
स्याऽभानं प्रत्यक्षतयाऽसिद्धमित्यर्थः॥
तमेव प्रत्यक्षं द्वेधा विभज्य दर्शयति
लोकव्यवहारइति॥ लोक्यते मनुष्यो
हमित्यभिमन्यते इति लोकोऽर्थाऽध्या
सोदर्शितः॥ तद्विषयोव्यवहारोऽभि-
मानइति ज्ञानाध्यासोदर्शितः॥ अ-
त्रायं भावः॥ अयं द्विविधोप्यध्यासः

यथेदं रजतमित्यत्र यदा शुक्त्यवच्छिन्नचैतन्यानिष्ठाऽविद्या रजताकारेण परिणमते ॥ तदा शुक्तीरजतत्त्वेन प्रतीयते ॥ अयमेवार्थाध्यासः ॥ यदा तु इदमिति शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽविद्या रजतज्ञानाकारेण परिणमते तदा शुक्तिज्ञानं रजतज्ञानत्वेन प्रतीयते ॥ अयमेव ज्ञानाध्यासः ॥ अयं द्विविधोप्यध्यासः ज्ञानत्वेन ज्ञेयत्वेन च धर्म्यध्यासएव । ततोऽध्यस्ते रजतेशोभनत्वादि तज्ज्ञाने च रागप्रवृत्तिः प्रवर्तते ॥ अयमेव धर्माध्यासइति ॥ एवं कूटस्थात्मन्यनाद्य-

विद्ययाऽहंकाराध्यासोऽर्थाऽध्यासः ॥ जानामीति ज्ञानाध्यासः ॥ अयं द्विविधोधर्म्यध्यासः ॥ अहं मनुष्योब्राह्मणइत्यादि धर्माध्यासइति॥तत्राऽतस्मिँस्तद्बुद्धिर्ज्ञानाध्यासः॥ यथा शुक्तौ रजतबुद्धिर्यथा वात्मन्यनात्मबुद्धिः ॥ प्रमाणाऽजन्यज्ञानाविषयः पूर्वदृष्टसजातीयोऽर्थाध्यासः ॥ सच द्विविधः प्रातीतिकोऽव्यावहारिकश्चेति ॥ तत्रागन्तुकदोषजन्यः प्रातीतिकः ॥ यथा शुक्तिरजतादिः ॥ आगन्तुकदोषास्त्रिविधाः ॥ प्रमातृदोषाः रागादयः प्रमाणदोषास्तिमिरादयः प्रमेयदोषाश्चा-

काचिक्यादयः तेषा मपि तूला विद्या-ऽऽवितत्त्वात् स्वपराध्यासे अविद्यैव कारण मिति ॥ प्रातीतिकभिन्नो व्यावहारिकः यथाकाशादि घटांतं जगत्॥ द्विविध मध्यासस्वरूप माह अन्योन्यस्मिन्नित्यादिना धर्मधर्मिणो रित्यन्तेन ॥ जाड्यचैतन्यादि धर्माणाम् धर्मिणा वहङ्कारात्मानौ तयोरत्यन्त भिन्नयो रितरेतरभेदाग्रहेणा न्योन्यस्मिन्नन्योन्यतादात्म्य मन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इतियोजना ॥ नन्वात्मानात्मनोः परस्पराध्यस्तत्त्वे शून्यवादः स्या दि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्याशंक्याह सत्यानृते मिथुनीकृत्येति सत्यमानिदं चैतन्यं तस्यानात्मनि संसर्गमात्राध्यासो न स्वरूपस्य। अनृतं युष्मदर्थ स्तस्यस्वरूपतोप्यध्यासात्॥ तयोर्मिथुनीकरण मध्यास इत्यतो न शून्यतेत्यर्थः। अध्यासस्यो पादान माह मिथ्याज्ञान निमित्त इति। मिथ्या च तदज्ञानं,च मिथ्याऽज्ञानं त न्निमित्त मुपादानं यस्य स तन्निमित्त स्तदुपादानमित्यर्थः॥ अध्यासं द्रढयितु माह॥ अह मिदं ममेद मिति॥ आध्यात्मिककार्याध्यासेष्व ह मिति प्रथमोध्यास इतिवाच्यम्॥ अयो दहति इतिवत्॥

अह मुपलभे इति दृक्दृश्यांशयो रुप-
लम्भात् ॥ इदंपदेन भोग्यस्संघात उ-
च्यते ॥ अत्रा हं इदं इत्यनेन मनुष्योऽ
हम् इति तादात्म्याध्यासो दर्शितः ॥
ममेदं शरीरमिति संसर्गाध्यासः ॥ तत्र
मनुष्यो ह मित्यैक्यांशतादात्म्यभा-
ने ममेदमिति भेदरूपं संसर्ग भानम् एवं
सामग्रीसत्वादनुभवसत्वा दध्यासो-
स्ती त्यतो ब्रह्मात्म्यैक्ये विरोधाभावेन
विषयप्रयोजनयोः सत्वात् शास्त्र मा-
रम्भणीय मिति सिद्धान्तभाष्यतात्प-
र्यम् ॥ अत्रा य मभावः अधिष्ठानसा-
मान्यज्ञानचैतन्यं पूर्वपूर्वभ्रमजन्यसं

स्कार श्च निमित्तं अनाद्यज्ञान मुपा-
दानं दोषश्च ॥ अज्ञातात्मा कर्तेति
सामग्रीसत्वा दध्यासः ॥ एतादृशसा-
मग्र्यभावेसत्यध्यासाऽभावश्चेति अथ
लक्षणभाष्यम्॥कोय मध्यासो नामेति
प्रश्नः ॥ उच्यते ॥ स्मृतिरूपः परत्र
पूर्वदृष्टा वभास इति लक्षणम् ॥ अ-
स्यार्थः ॥ स्मृतिः स्मर्यमाणंवस्तु । त-
द्रूप स्तत्सदृशः ॥ साम्यं स्फोटयति
पूर्वेति । दृष्टं दर्शनं संस्कार द्वारा पूर्व-
दर्शना दवभाष्यत इत्यर्थः ॥ तथा च
संस्कारजन्यज्ञानविषयत्वं शुक्तिरूपस्य
स्मर्यमाणेन सादृश्यं॥एवं च स्मर्यमाण

सद्दृशत्वेसति परत्रा वभाष्यत्व मध्य-स्तत्वमितिसिद्धम्॥अथवा॥एकावच्छे-देन स्वसंसृज्यमानाधिकरणे स्वात्य-न्ताभाववत्व मवभाष्यत्वमिति॥साद्य-नाद्यध्यस्तत्त्वसाधारणं निर्दिष्टं लक्षणम्। तथापि स्मृतिरूपपदं नञ्यर्थं तद्दलेनैव परत्रावभासपदाभ्या मुक्तलक्षणलाभा-त्॥ तत्पदं बिना परत्रावभास इत्युक्त्या न्यथा ख्यातिशंका स्यात् ॥ परत्र पदेन परत्रावभाष्योर्थः ॥ स्मर्यमाण-सद्दृश इत्युक्तया स्मर्यमाणा द्भिन्नोर्थ स्तत्रवर्तत इत्युक्तं भवति तत उक्तलक्ष-णलाभः तस्मिन्नर्थे पूर्वोक्तसामग्रीस्मर-

णार्थं पूर्वदृष्टपदेन संस्कारजन्यत्व मुक्त मित्यनवद्यम् ॥ अत्रैव ख्यातिवादिना मवसरः प्रकरणस्य संक्षिप्तत्वाद्विस्ता-रभयान्नोक्तः ॥ तथाचोक्तम् ॥ आत्म[1]-ख्याति रसत्[2] ख्याति रख्यातिः[3] ख्या-तिरन्यथा[4]॥तथाऽनिर्वचनख्याति[5] रित्ये-तत् ख्यातिपञ्चक मिति ॥ अथ स-म्भावना भाष्यम् ॥ तथाच लोके ऽनु-भवः। शुक्तिका[6] हि रजतव दवभासते॥ एक श्चन्द्रः स द्वितीयव दवभासते। अप्रत्यक्षे[7] ऽपि ह्याकाशे बाला स्तलम-

१ आत्मख्यातिवादीक्षणिकविज्ञानवादी वौद्धः । २ असत्ख्यातिवादी शून्यवादी वौद्धः । ३ अख्यातिवादी मीमांसकः । ४ अन्यथाख्यातिवादी तार्किकः । ५ अनिर्वचनीयख्यातिवादी वेदान्ती । सत्ख्यातिवादीसांख्यः । ६ कार्योऽध्यासे दृष्टान्तः शुक्तिकेति ७ कारणाविद्याध्यासे दृष्टान्तः अप्रत्यक्षेति ॥

लिनताद्यध्यस्यंति ॥ एंव मविरुद्धः प्रत्यगात्मन्यप्य नात्माध्यासः एतत्सुगमं ॥ अथ प्रमाणपरं भाष्यम् ॥ तमेत मेवंलक्षण मध्यासं पण्डिता अविद्या इति मन्यन्ते। तद्विवेकेन च वस्तुस्वरूपावधारणं विद्याम् आहुः ॥ तत्रैवं सति यत्र यदध्यास स्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते त मविद्याख्य मात्मानात्मनो रितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्चप्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति॥ अस्तु तर्हि प्रत्यक्षादीना

मध्यासाश्रयत्वं कथं तत्वमस्यादिवाक्यानां ज्ञानोत्पत्तिहेतुत्त्वादध्यासाऽश्रयत्व मिति। पृच्छति॥ कथं पुन रविद्याव द्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ॥अस्यार्थः॥ अविद्यावा नह मित्यध्यासवा नात्माप्रमाता स विषय आश्रयो येषां तानि अविद्यावाद्विषयाणीतिबिग्रहः॥ तत्प्रमेयहेतुभूतायाः प्रमाया अध्यासात्मप्रमात्राश्रितत्त्वात् प्रमाणाना मविद्यावाद्विषयत्व मिति योजना॥ उत्तरमुच्यतेदेहेन्द्रियादि ष्वहंममाभिमानरहितस्यप्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः॥

नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिऽव्यवहारः सम्भवति ॥ नचाधिष्ठानमन्तरेणेन्द्रियऽव्यवहारः सम्भवति ॥ नचानध्यस्तात्मभावेन देहेन कश्चिद्ऽव्याप्रियते ॥ नचैतस्मिन् सर्वस्मिन्नसति असंगस्यात्मनः प्रमातृत्व मुपपद्यते ॥ नचप्रमातृत्व मंतरेण प्रमाणप्रवृत्तिरस्ति ॥ तस्माद विद्याव द्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्रा-

---

१अत्रायंभावः यथा कश्चित्पुरुषः स्वप्ने स्वाविद्योद्भावित व्याघ्रं ददर्श ॥ स चाऽविभेत् ॥ तदा तन्निवृत्तियोग्यं शस्त्रं गृहीत्वा तेनैव शस्त्रेण तं हत्वा च प्रबुद्धवान् नपुनः शस्त्रप्रयोजनम् । गतातत्रंसंकार्यातूलाऽविद्येति तथा यमप्यात्मा शुद्धबुद्धकूटस्थोऽपि राजनाद्यविद्ययावृत स्तत्कार्येऽन्तःकरणे प्रतिबिंबितःसन् स्वचिदाभासाऽविवेकात् कर्त्ता भोक्ता संसारीसुखीदुःखी च भवति तदायंशुभकर्मपरिपाकांते तन्निवृत्त्युपायं वेदान्तप्रमाणराजंगृहीत्वा तामविद्यांनिवर्त्यनपुनः प्रमाणापेक्षा प्रयोजनाभावात स्वेनबोद्धरूपतयाप्रकाशमानत्वाच्चेति ।

णिचेति सिद्धम् ॥ अस्मिन् भाष्ये-गूढार्थं वक्ष्यामि अन्यत्सुगमम् ॥ नैचतास्मिन्नित्यस्य ॥ तथा च प्रमा-श्रयत्वेहि प्रमातृत्वम् ॥ प्रमा यदि नित्यचिन्मात्रं तर्हि आश्रयत्वायोगः करणवैयर्थ्यं च यदि वृत्तिमात्रं तदा जगदान्ध्यप्रसंगः ॥ वृत्तेर्जडत्वादित्य-तो वृत्तीद्धो बोधः बोधेद्धाचवृत्तिः प्रमा तदाश्रय मसंगस्यात्मनो वृत्तिमन्मन-स्तादात्म्याध्यासं विना नसम्भवतीति। तथा भामतीकारोप्याह प्रमातृत्वं हि प्रमांप्रतिकर्तृत्वं तच्च स्वातंत्र्यं स्वातंत्र्यं च प्रमातु रितरकारकाप्रयोज्यस्य सम

१ इतरैः इन्द्रिय रूप करणकारकैः अप्रयोज्यत्वे सति समस्तेन्द्रिय रूप कारकप्रयोक्तृत्वं प्रमातुः स्वातंत्र्यं स्वतन्त्रस्य भावः स्वातन्त्र्यमितियोजना।

स्तकारकप्रयोक्तृत्वं तदनेनप्रमाकरणं प्रमाणं प्रयोजनीयम् ॥ नच स्वव्यापारमन्तरेण करणं प्रयोक्तुमर्हति॥ नच कूटस्थाचिदात्मापारिणामी स्वतो व्यापारवान् ॥तस्माद्‌व्यापारवत्बुद्धयादि तादात्म्याध्यासात् व्यापारवत्तया प्रमाण मधिष्ठातु मर्हतीति भवत्यविद्यावत्पुरुषाविषयत्वम् अविद्यावत्पुरुषाश्रयत्वं प्रमाणाना मिति सिद्धम् ॥ कल्पतरुकारोप्याह ॥ प्रमा तु चिदाचिद्रूपगर्भिणी कल्पयत्यध्यास मिति ॥ तथा संक्षेपशारीरकेपि ॥ अल्पं रूपं वन्धनं प्रत्यगात्मा वद्धोऽनेन स्वच्छ-

चैतन्यमूर्त्तिः ॥ स्वात्माज्ञानं कारणं वन्धनेस्य स्वात्माज्ञाना त्तन्निवृत्ति श्च मुक्ति रिति ॥ अल्पंतुच्छमपि त- दनेन धर्म्म धर्म्यध्यासरूपेणात्मा वद्धो निगडित इवेत्यर्थः ॥ अत एवमध्यासेसिद्धे, एकस्या प्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्र- तिकर्मव्यवस्था चोप पद्यते ॥ जिज्ञासा प्यस्यानर्थहेतो रध्यासस्य कारणी भूता ज्ञाननिवृत्त्यर्थमवश्यं करणीयेति सिद्धं भवति ॥ तथाच शारीरकप्रथम- सूत्रम् ॥ अथा तो ब्रह्मजिज्ञासे ति ॥ अस्यार्थः ॥ अथे त्यानंतर्यार्थम् ॥ सा-

धनचतुष्टयानंतर मित्यर्थः ॥ अतः हेत्वर्थे यतो यस्मा च्छास्त्र मेवास्य साध्यसाधनवर्गस्या नित्यत्वं वोधयति॥ तद् यथेह कर्मचितोलोकः क्षीयते एव मेवा मुत्र पुण्यचितोलोकः क्षियते इत्यादि छान्दोग्ये ॥ तस्मात् सत्यस्यात्मनो जिज्ञासा कर्त्तव्येति॥ सामान्यतया ह मस्मीति सर्वस्य लोकस्यात्मा प्रतीयते तथाप्ययय महमस्मि परं ब्रह्मेति विशेषतो ना विद्ययाप्रतीयतइत्यतो ब्रह्मजिज्ञासाकर्त्तव्या साधन चतुष्टय सम्पन्नेन ब्रह्मविचारः कर्त्तव्य इत्यर्थः । ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञा-

सेति षष्ठीसमासः। तथाच श्रुतिर्मुण्ड-
कोपनिषदि॥ परीक्ष्य लोकान् कर्म्मस-
चितान् ब्राह्मणो निर्वेद मायान्नास्त्य-
कृतः कृतेन॥तद्विज्ञानार्थं स गुरु मेवा-
भिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनि-
ष्ठम्॥१२॥तस्मै सविद्वानुपसन्नाय सम्य
क्प्रशान्तचित्ताय शमान्विताय॥येनाक्ष
रं पुरुषं वेद सत्यम् प्रोवाच तां तत्वतो ब्र-
ह्मविद्याम्॥१३॥अस्यार्थः लोकान् संसा
रगतिहेतुभूतानव्यक्तादिस्थावरान्तान्
व्याकृताव्याकृतादिलक्षणान् बीजांकु
रव दितरेतरोत्पत्तिनिमितानानेकानर्थ
शतसहस्रसंकुलान् कदलीगर्भवदसा

रा न्मायामरीच्युदक गंधर्वनगराका-
रस्वप्नजलबुद्बुदफेनसमान् परीक्ष्य
प्रत्यक्षागमानुमानै र्मिथ्यात्व मवधार्य
निर्वेदं वैराग्यं कुर्य्यात्।अकृतः आत्मा
कृतेन क्रियासाध्येन कर्म्मणा तस्या-
प्राप्ति र्नास्ति ॥ अतस्तद्विज्ञानार्थं ह-
स्तोपहारः सन् स्वाभिलषितगुरु म-
भिगच्छेत् गत्वा पृच्छेत् ॥प्रश्नप्रकारो
विवेकचूडामणौ प्रदर्शितः ॥ तथाहि॥
स्वामिन्नमस्ते नतलोकबन्धो कारुण्य-
सिन्धो पतितं भवाब्धौ ॥ मा मुद्धरा
त्मीयकटाक्षदृष्ट्या ऋज्व्या तिकारु-
ण्यसुधाभिवृष्ट्या ॥ ३७ ॥ एवं संप्रा-

र्थ्यं पृच्छेत् तथा च प्रश्नः। कथं तरेयं भवासिन्धु मेतं का वा गतिर्मे कतमो ऽस्त्युपायः ॥ जाने न किंचित् कृपया-व मां प्रभो संसारदुःखक्षति मातनुष्व इति। तथा स विद्वान् यथार्थतो यो-ग्याय शिष्याय ब्रूयात् वदेदिति श्रुतौ ब्राह्मण इतिशब्देनांतर्बहिस्त्यागेन ब्रा-ह्मणस्य मुख्यब्रह्मविद्याया माधिकारः सूचितः ॥ तत्सामीप्यात् द्विजातित्त्वेन क्षत्रियवैश्ययो रप्याधिकारः नतुशूद्रा-दीनां श्रुतिस्मृतिसूत्रभाष्यकारैर्निरा-कृतत्त्वात् तथा च सूत्रं ॥ श्रवणाध्यय-नार्थप्रतिषेधात् स्मृते श्च ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शारीरकभाष्यं इत श्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधः तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्य्यते । श्रवणप्रतिषेध स्तावद्यथा स्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण मिति ॥ पादयुक्तं प्रायश्चित्तमपि श्रूयते ॥ पद्युहवा एतत् स्मशानं यच्छूद्रस्तस्मात् शूद्रसमीपे नाध्येतव्य मितिच ॥ ॥ अतएवाध्ययनप्रतिषेधो यस्य हि समीपेपि नाध्येतव्यं भवति स कथं श्रुतमधीयत ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवति च वेदोच्चारणे जिह्वोच्छेदो-
धारणे शरीरभेद इति ॥ अत एव च
तदर्थज्ञानाऽनुष्ठानयोः प्रतिषेधो भ-
वति ॥ न शूद्राय मतिं दद्याद् धर्मं चा-
स्यनोपदिशेदितिच ॥ द्विजातीनाम-
ध्ययनमिज्यादानमितिच ॥ येषां
पुनः पूर्वकृतसंस्कारवशात् विदुर धर्म-
व्याध प्रभृतीनां ज्ञानोत्पत्ति स्तेषां न
शक्यते फलप्राप्तिः प्रतिबद्धुं ज्ञानस्यै-
कान्तिकफलत्वात् श्रावयेच्चतुरोव-
र्णान् कृत्वा ब्राह्मणमग्रत इति चेति-
हासपुराणाऽधिगमे श्रवणे चातुर्वर्ण्य-
स्याधिकारस्मरणात् ॥ वेदपूर्वकस्तु

नास्त्यधिकारः शूद्राणामिति सिद्धम्॥ प्रकृतमनुसरामः ॥ एवमधिकारपूर्वकजिज्ञासायां बृहदारण्यकश्रुतिः ॥ आत्मावा अरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते विज्ञात इदंसर्वंविदितम्॥ इति अत्र विधिवाचकेन तव्यप्रत्ययेन श्रवणादीनां नात्रापूर्वविधिस्तस्याः स्वर्गकामोयजेदित्यादि वाक्येष्वदृष्टार्थविधायकत्वात् आत्मात्वहमिति सामान्यतया सर्वैरनुभूयते ॥ बाह्यार्थनिराकरणेन नियमः परिसंख्यावा विधिरत्रस्यात् ॥ तत्स्वरूपं चोक्तं ॥ वि-

धिरत्यन्तमप्राप्तौ नियमः[2] पाक्षिकेसति। तस्यचान्यस्य च प्राप्तौ परिसंख्येति[3] गीयते ॥ १ ॥ अत्र मनननिदिध्यासनादिभिरङ्गैस्सहितं श्रवणं नामाङ्गी विधीयतइति नाप्यत्र नियमः परिसंख्या वा विधिर्ज्ञाने ॥ वेदान्ता बोधका नविधायका इतिभाष्योक्तत्वात् ॥ वेदान्तनये अज्ञातज्ञापकं प्रमाणलक्षणं तत्प्रमाणं तत्त्वमस्यादिवाक्यजातं तदेव ब्रह्मात्मैक्यप्रमोत्पत्तौकरणं प्रमाकरणंप्रमाणमित्युक्तत्वात् ॥ अथ क्र-

स्वर्गकामोयजेदित्यपूर्वविधिः ॥ तत्रस्वर्गस्याद्दष्टार्थत्वात् ॥ २ यथाव्रीहीनवहन्यादित्यवघातविधिर्नियमविधिः॥ ३ यथा पञ्चपञ्चनखाभक्ष्याइतिपरिसंख्याविधिः अत्र नियमपरिसंख्याविध्योरुभयत्रेतरव्यावृत्तेरविशेषेपि नियमविधौ इतरव्यावृत्तिरार्थिकी परिसंख्याविधौ विधेयोतिविशेषः ॥

मप्राप्तं प्रमालक्षणं वर्ण्यते ॥ पूर्वोक्त-
बोधेद्धावृत्तिर्वृत्तीद्धबोधोवेति जीवेश्वर-
गतसाधारणंप्रमालक्षणं॥वृत्तिर्नामविषय
चैतन्याभिव्यंजकोऽन्तःकरणाज्ञानयोः
परिणामविशेषः अभिव्यंजकत्वंनामा-
ऽपरोक्षव्यवहारजनकत्व मावरणानिव-
र्तकत्वंवा॥ सा च वृत्तिः प्रमाऽप्रमाभे-
दाद्द्विधा तत्र प्रमाभिन्नाऽप्रमा तस्या
निरूपणेनात्रप्रयोजनं तस्याअर्थसिद्ध-
त्वात् तत्र ईक्षणापरपर्यायाकाशादि-
स्रष्टव्यविषयाकारामाया वृत्तिप्रति-
बिंबितचिदीश्वराश्रया तदैक्षत बहुस्यां
प्रजायेयमित्यादिश्रुते रनधिगतावा-

धितविषयाकारांतः करणवृत्तिप्रतिविंवितचिज्जीवाश्रया प्रमा ॥ अनधिगतः अज्ञातः बोधेनाविषयीकृतो योर्थो विषयस्तदाकारायांतःकरणवृत्तिस्तत्प्रतिविंवितचिदित्यर्थः भ्रांतिज्ञानेऽतिव्याप्तिवारणायाबाधितेति ॥ भ्रमविषयीभूतस्य रजतस्य बाधितत्त्वात् ॥ ब्रह्मात्म्यैक्यप्रमायास्तथात्वान्नासम्भ-[2]

अत्रायंभावः ॥ बोद्धृवृत्तेः प्रमात्वपक्षे ॥ अखण्डचैतन्यस्यावरणभङ्गाय स्यंशविषयतया ज्ञानज्ञेययो र्विषयविषयिभावः ॥ वृत्तीद्धबोधस्य प्रमात्वपक्षे विषयत्वंनामव्यंग्यत्वंविषयित्वंनामव्यंजकत्वं विषयानिष्ठावरणनिवर्तकत्वमिति यावत् ॥ ततश्च ज्ञानज्ञेययोर्विषयाविषयिभावः ।

२ इदमत्राकूतं ननुवृत्तीद्धबोधस्य प्रमात्वेनाऽखण्डचैतन्यस्य स्वप्रकाशत्वे वृत्तिप्रतिर्विंवताभासेनतद्भास्यत्वायोगात् ॥ कथंविषयाविषयिभावः ॥ अस्योत्तरमुपरिष्टादुक्तं तथात्वादनधिगताबाधितार्थविषयाकारांतः करणवृत्तिप्रतिविंवितचित्त्वान्नासम्भवः ॥ २ ॥

वः ॥ यद्यपि प्रत्यक्षादिभेदेन सा प्रमा षड्विधा तथापि मुख्यज्ञानहेतुभूता-शाब्दी प्रमैवात्र निरूप्यते ॥ नचै-कस्यैव चैतन्यस्य कथं प्रमाता प्रमाणं प्रमेयं प्रमाचेति चे च्छृणु ॥ शरीर-मध्ये स्थितः सर्वशरीरव्यापकः स-त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धः अंतः करणाख्योऽ विद्यापरिणामः चैतन्य-विवर्तो दर्पणादिवदतिस्वच्छः नेत्रा-दिद्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति॥ द्रुतताम्रादिवत् ॥ तस्यच सौरालो-कादिवत् झटित्येवसंकोच विकाशा-

वुपपद्येते सचसावयवत्वा त्परिणम-
मानो देहाभ्यंतरे घटादौ च सम्य
ग्व्याप्य देहघटयोर्मध्येपि चक्षुर्वद-
वच्छिन्नोप्यवतिष्ठते ॥ तत्र देहे न्त:-
करणभागो ऽहंकाराख्यःकर्तेत्युच्यते॥
देहविषयमध्यवर्ति दण्डायमान स्त-
द्भागो वृत्तिज्ञानाख्यः क्रियेत्युच्यते।
विषयव्यापक स्तद्भागो विषयस्य
विषयज्ञानकर्मत्वसम्पादकमभिव्य-
क्तियोग्यत्व मित्युच्यते ॥ तस्य च
त्रिभागस्यांतः करणस्या ति स्व-
च्छत्त्वात् चैतन्यं तत्राभिव्यज्यते ॥
तस्य चाभिव्यक्तस्य चैतन्यस्य एक-

त्वेप्यभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशोभवति ॥ तत्र कर्तृभागावच्छिन्नचिदंशः प्रमाता प्रमानुकूलव्यापारवत्त्वात् ॥ क्रियाभागावच्छिन्नचिदंशः प्रमाणम् । विषयसंस्पृष्टभागरूपप्रमासिद्ध्यर्थं प्रमातृव्यापारावशिष्टत्वात्॥ विषयगतोऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमा ॥ अज्ञातविषयभागत्वात् । प्रमेयन्तु विषयगतं ब्रह्मचैतन्यमेवाज्ञातं तदेवचज्ञातं सत्फलम् ॥ अत्र प्रमावृत्तिः प्रमातृचिदुपरागार्था आवरणभङ्गार्थाचेति कारणभेदेन स्वीकृता ॥

अथ कारण निरूपणम् ।। शुद्धबुद्धमुक्त-सत्यज्ञानानन्दब्रह्मैव स्वस्यनिष्प्रपञ्चतारूपां शुद्धिमपरित्यजदेव संसारका-रणम् ॥ तादृशकारणं विवर्ताधिष्ठान-तयैवानिर्वहति । यथा सर्पाद्यधिष्ठान रज्ज्वादेःसर्पादिविभ्रमकालेपि स्वरू-पस्थितिदर्शनात्॥ अत स्तादृशकारण मुररीकृत्य प्रपञ्चरूपेण परिणामार्थ मज्ञान मपि स्वीकृतम् ॥ उपादान-समसत्ताकोऽन्यथाभावः परिणामः ॥ उपादानविषमसत्ताको ऽन्यथाभावो-विवर्तः ॥ तत्रचैतन्याऽपेक्षया विवर्त्तः॥ अज्ञानापेक्षया परिणामः ॥ तथा-

चोक्तं संक्षेपशारीरिके ॥ आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव-केवला ॥ पूर्वसिद्धतमसोहिपाश्चिमो ना-श्रयोभवतिनापिगोचरः ॥ तमस अज्ञान-स्य स्वसत्ताप्रदानेन केवला जीवेश्वर-विभागरहिता आश्रयत्वं विषयत्वं भज-तीत्याश्रयविषयभागिनी चितिरेवेत्य-न्वयः ॥ पूर्वइतिजीवेश्वरविभागेऽसति सतिचजीवेश्वरविभागइतिपाश्चिमश-ब्दोक्तिःतदानाश्रयोभवति नापिगोचरे-त्यर्थः । पश्चाद्द्व्यवस्थांचाहतत्रैव । साभासमे तदुपजीव्यचिदद्वितीया संसारकारण-मितिप्रवदन्तिधीराः साभासमेतादिति

संसृतिकारणत्वे द्वारंपरंभवति कारणताद्दशस्तु ॥ अद्वितीयाचित् । साभासमेतदज्ञानं उपजीव्यमाश्रित्य संसारकारणम्भवती तिधीराः कूटस्थतत्वज्ञाः प्रवदन्ति कथयन्ति ॥ तुपुनः दृशः निर्विकाराचितः संसारोत्पत्तौ साभास एतदज्ञानं द्वारं पर मग्रणीः तदाब्रह्मणः कारणतानाम कारणत्वं शवलत्त्वं च सिद्धम् । १ । अयंभावः॥ यथाऌतानामकीटः तन्तुकार्यंप्रति स्वस्थूलशरीरतयोपादानं स्वलिंग शरीरतया निमितंच ॥ तथाएकंकूटस्थचैतन्यं स्वस्मिन्नध्यस्तं स्वमाया-

माश्रित्योपादानं जीवसंस्कारतया निमित्तंचेत्यभिन्ननिमित्तोपादानं ब्रह्मैवेत्यर्थः केवलचैतन्यकारणत्वे सत्याकाशादि रूपेणविकारित्वापात्तिः॥केवलाज्ञानस्यकारणत्वे सांख्यमतापात्तिः स्यात् । एतदर्थं ब्रह्मणःशवलत्व स्वीकारः तटस्थलक्षणनिष्पत्त्यर्थंच॥ वस्तुतस्तु निर्विकारशुद्धब्रह्मैव विवर्ताधिष्ठानत्वेन मुख्यं कारणमिति ॥ तथाहि शारीरकसूत्रं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ अस्यार्थःप्रकृति जगत्कारणं शुद्धं ब्रह्म कस्मात्प्रतिज्ञादृष्टान्तयोरनुपरोधात्प्रामाण्यादि-

त्यर्थः।उत तमा देशमप्राक्ष्यो येनाश्रुतं-
श्रुतं भवत्यमतंमतमविज्ञातंविज्ञातमि
त्येकविज्ञानेनसर्वविज्ञानं प्रतिज्ञा ॥
यथासोम्यैकेनमृत्पिण्डेन सर्वंमृण्मयं-
यंविज्ञातंस्याद् वाचारम्भणंविका-
रो नामधेयंमृत्तिके त्येवसत्यमिति
दृष्टान्तः उभयश्रुतिप्रामाण्य निर्वा-
हार्थमभिन्ननिमित्तोपादानकारणंब्र-
ह्मैवेति सिद्धम् ॥ यतोवा इमानिभू-
तानि जायन्ते इतितटस्थलक्षणश्रु-
तिः॥तस्माद्वा एतस्मादात्मन आकाश-
सम्भूत इतिसृष्टिक्रमश्रुतिः॥ तस्मात
सत्यज्ञानशुद्धस्वरूपादेतस्मात् माया-

शबलात् आकाशस्सम्भूतउत्पन्नः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथिवी ॥ पृथिव्या ओषधयः । ओषधिभ्योऽन्नम् ॥ अन्नाद्रेतः ॥ रेतसः पुरुषः ॥ इत्यत्रैवपञ्चकोशावस्था यत्रपञ्चकोशे चतुर्विंशतितत्त्वादीनामुत्पत्तिक्रमः ॥ तथाच सच्छब्दवाच्यमविद्याशबलं ब्रह्मब्रह्मणोऽव्यक्तं अव्यक्तान् महत् महतोऽहंकारः अहंकारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि पञ्चमहाभूतेभ्योऽखिलंजगत् ॥ अन्यत्सुगमत्वाद् नोक्तम् ॥ अथ वाक्यार्थोपयोगित-

या प्रक्रियांशभेदेन जीवेश्वरविवेचनम् अथाऽऽभासवादः॥ तथाहि। अज्ञानोपहितआत्माऽज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेका दन्तर्यामी साक्षी जगत्कारणमितिकथ्यते॥ बुद्ध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेका जीवः कर्त्ता भोक्ता प्रमातेतिचकथ्यते॥ इति वार्तिककारा आहुः॥ प्रतिदेहं बुद्धीनां चभिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तंचैतन्यमपि भिन्नमिव प्रतीयते॥ अज्ञानस्य तु सर्वत्राभिन्नत्वा त्तद्गताश्चिदाभासभेदाभावात्॥तदविविक्तसाक्षिचैतन्यस्य

न्कदापिभेद भानमिति । अस्मिंश्च-
पक्षे तत्त्वमादिपदे जहल्लक्षणैव साभास
स्योपाधे र्वाच्यार्थस्य हानात् ॥ आ-
भासस्यापिजडाजडविलक्षणत्वेनानि-
र्वचनीयत्वात तदुक्तं संक्षेपशारीरके॥
साभासाऽज्ञानवाचीयदिभवतिपुन र्ब्र-
ह्मशब्दस्तदाहं शब्दोहंकारवाचीभव-
तिजुजह तीलक्षणातत्रपक्षे इति॥ नचा-
भासस्यैव बद्धत्वात् केवलचैतन्यस्य-
मुक्तत्वात् बन्धमोक्षयोर्वैयाधिकरण्यम्
स्वनाशार्थंप्रवृत्त्यनुपपत्तिश्चेतिवाच्यम्
केवलचैतन्यस्यैवाभासद्वारा बद्धत्वा-
भ्युप गमात तदुक्तंवार्तिक कारपादैः।

अयमेवाहिनो नर्थो यत्संसार्यात्मदर्शनमिति ॥ तेनशुद्धचैतन्यमपि तत्वमादिपदवाच्यं तेनवाच्यैकदेशस्याऽत्यागादस्मिन्पक्षे जहदजहल्लक्षणावेतिन कोपिदोषः । मायाप्रतिबिंबितं चैतन्यमीश्वरः अविद्याप्रतिबिंबितं चैतन्यंजीवइत्याभासवादः ।अथ प्रतिबिंबवादः अज्ञानोपहितं बिम्बचैतन्यमीश्वरः अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिंबितं चैतन्यं जीवइतिविवरणकाराः ॥ अज्ञानेप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितंचैतन्यं जीवः अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशा-

रीरककाराः अनयोः पक्षयोर्बुद्धिभेदा
ज्जीवनानात्वं प्रतिबिंबस्यापारमार्थिक-
त्वात् जहदजहल्लक्षणैव तत्त्वमादिप-
देषु ॥ अग्निर्यथैकोभुवनंप्रविष्टो रूपं
रूपंप्रतिरूपोवभूव ॥ एकस्तथासर्वभू-
तान्तरात्मा रूपंरूपंप्रतिरूपोवहिश्चे-
त्यादिश्रुतिः तथाशारीरकसूत्रम्॥ आ-
भासएवच॥अतएवचोपमासूर्य्याकाशा
दिवत् इत्यादिश्रुतिसूत्राण्युभयेआभा-
सप्रतिबिम्बवादेप्रामाणानि अनयोराभा
सप्रतिबिम्बवादयोरयंभेदः।आभासवा-
देधर्म्यध्यासः।आभासस्य मिथ्यात्वात्
प्रतिबिम्बवादे धर्माध्यासःप्रतिबिम्बस्य

धर्मिणः सत्यत्वात्॥ इतिप्रतिबिम्बवा-
दः॥ अथावच्छेदवादः॥ अत्रैकमेव-
चैतन्यमज्ञानाश्रयाविषयत्त्वभेदेन द्वि-
धाकृतम्॥ तथाहि अज्ञानविषयीकृत-
चैतन्यमीश्वरः॥ अज्ञानाश्रयीभूतं च
जीवः। इतिवाचस्पतिमिश्रा आहुः॥
विषयीकृतं जीवाऽपेक्षयाऽज्ञातम्।
आश्रयीभूतं आवृतं जीव इत्यर्थः।
अस्मिन्पक्षे ऽज्ञाननानात्वाज्जीवना-
नात्वं प्रतिजीवञ्चप्रपञ्चभेदः॥ तथा-
चोक्तंवाचस्पतिसंग्रहे॥ अज्ञानंप्रति-
जीवंस्या छिन्नंब्रह्मपदञ्चतत्॥ वन्ध-
मोक्षव्यवस्थातो ब्रह्मश्रौतञ्चासिद्ध्य-

तीति ॥ अस्मिन्मते जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वम् ॥ प्रतिजीवंप्रपञ्चभेदे योघटस्त्वयादृष्टस्सएवमयादृष्टइति ज्ञानं कथं भवेदितिचेत्सादृश्यात् ॥ ईश्वरस्य सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारः ॥ इत्यवच्छेदवादः ॥ ३ ॥ अथ-मुख्यवेदान्त सिद्धान्तएकजीववादः ॥ तथाहि अज्ञानोपाहितं विम्वचैतन्यमीश्वरः ॥ अज्ञानेप्रतिविम्वितं चैतन्यं जीवः ॥ अथवाअज्ञानानुपाहितं चैतन्यं शुद्धमीश्वरः ॥ अज्ञानोपहितं जीवइति इममेव दृष्टिसृष्टिवादमाचक्षते ॥ अ-

स्मिंश्चपक्षे जीवएवस्वाज्ञानवशात् ज-
गदुपादानं निमित्तंच दृश्यंसर्वंप्रातीति-
कम् ॥ देहभेदाच्च जीवभेद भ्रान्तिः॥
एकस्यैवच स्वकल्पितगुरुशास्त्राद्यु प-
बृंहितश्रवणमननादिदार्ढ्या दात्मसा-
क्षात्कारेसतिमोक्षः ॥ शुकादीनां मो-
क्षश्रवणंत्वर्थवादः ॥ अत्रैकस्यैव स्वप्न-
दृष्टान्तस्य सर्वशंकासमाधानेक्षमत्व-
मुक्तम्मुक्तावल्ल्यांतथाहि ॥ वन्धमो-
क्षव्यवस्थास्याज्जीवाभेदेकथंतवेतिप्र-
श्नः यथादृष्टंतथैवास्तु दृष्टत्वात्स्वप्न
दृश्यवदित्युत्तरम् ॥ अन्यदपि॥ ब्रह्मा-
ज्ञानादीशजीवादिभावाद् भ्रान्तंजाग्र-

T

त्स्वप्नसुप्तीर्विभार्ति ॥ स्वात्मज्ञानादज्ञतायानिवृत्तौ नान्योजीवोनास्तिचाज्ञातमन्यादिति ॥ अस्यार्थः ब्रह्माज्ञानं देवादि शरीराकारेण जगदाकारेणच परिणमते तदेवा ज्ञानं तद्वृत्त्याकारेण च विषयाणां चैतन्यसम्वन्धार्थं परिणमते ॥ साचवोधेद्धा तदाकाराविद्या वृत्तिर्ज्ञानाभासइति भ्रमइतिचोच्यते विषयोपि ततएव स्फुरति । ततोविषयस्य देहस्य जगतश्चा विद्यावृत्तेश्च सर्वेषामविद्योपादानत्वादविद्या याश्चा द्वैतसाक्षात्कारान्निवृत्तौ निवृत्तिरुचितेति युज्यते स्वप्नवदेवेत्यर्थः॥ १ ॥ किं-

वहुना एवं घटपटादिकार्यमात्रे कारणाकांक्षायां कारणत्वेनाविद्यैवोपसंहर्तव्या तदर्थिनातत्तत्कारणविशेषोपादानंतु तथैव पूर्वोक्तस्वप्नवदुपपादनीयं ततोब्रह्मातिरिक्तं कृत्स्नं कार्य्यजातं ज्ञानज्ञेयरूपं तत्सर्वं माविद्यकमेव प्रातीतिकमेवसत्वं सर्वस्येतिसिद्धम् ॥ तदुक्तं वासिष्ठे ॥ अविद्यायोनयोभावाः सर्वेऽमी बुद्बुदाइव ॥ क्षणमुद्भूयगच्छंति ज्ञानैकजलधौलयमिति नन्वीश्वरादृष्टादिविनैवाऽविद्या कारणमिति तत्र किं प्रमाणमितिचेदुच्यते ॥ यथासतोजनिर्नैवमसतोपिजनिर्नच ॥ जन्यत्व-

मेव जन्यस्य मायिकत्वसमर्पकामिति॥
सत्तात्रयकथनंतु भ्रान्तिशांत्यर्थंद्वेएव-
सत्तेभवतः॥ प्रतीतिमात्रंसत्वम् ॥ अ-
थवाप्रातीतिकं सत्वमित्युभयोर्ज्ञानज्ञे-
ययोःप्रातिभासिकव्यावहारिकयोःक-
ल्पितत्वाऽविशेषेण प्रातिभासिकत्वमे-
वेति ॥ तथाचोक्तम्संक्षेपशारीरके ॥ प-
रिकल्पितोपिसकलज्ञतया गुरुरेवपूर्ण
मवबोध यति॥ परिकल्पितोपिमरणा-
यभवे दुरगोयथानतुनभोमलिनम् ॥
अस्यार्थः। ननुगुर्वादेः परिकल्पितत्वे
स्थाणुपुरुषवन्नतत्त्वोपदेष्टृत्वंस्यादित्या
शङ्क्यव्यावहारिकगुर्वादिशरीरावच्छि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नजीवस्य घटादाविव ब्रह्मण्यपि प्रमातृत्वतया तन्निश्चयसम्भवेन तदुपदेशउपपद्यते नैवंस्थाणुपुरुष स्येत्याशयेनदृष्टान्तमाहपरिकल्पितइति एवकारेण स्थाणुपुरुषादिवद् व्यावर्तयति॥ एतदर्थानुवादिनी श्वेताश्वतरोपनिषदि श्रुतिरपि ॥ अजामेकांलोहितशुक्लकृष्णां वह्वीः प्रजास्सृजमानांसरूपाः। अजोह्येकोजुषमाणोनुशेत्ते जहात्येनांभुक्तभोगामजोऽन्यः ॥ २ ॥ अस्यार्थः॥ असत्यस्य जगतोऽविद्याहेतुकत्वेवक्तव्ये साकिंजन्याऽजन्यावेतिसंशये नजन्येत्याह अजामिति नचाविद्यावाच-

कपदाभावअजा मित्यस्यैव स्त्रीलिङ्ग-निर्दिष्टतयाऽविद्यावाचकत्त्वा त्तस्या-अनेकत्वं व्यावर्तयति एकामिति त-स्याविचित्रकार्यजननसामर्थ्य त्त्वम् त्रिगुणात्मिक त्वेन समर्थयते लोहिते-त्यादिना ॥ तादृशाविद्यो पहित-स्य जीवस्योत्त्पत्तिंनिरस्यति अजइ-ति ॥ तस्य जीवस्यानेकत्वं निरस्य ति अज इति ॥ ननुतस्यजीवस्या-नेकत्वं लोकेऽनुभूयतेतत्कथमेक-त्वमित्याशंक्याभेदस्योपनिषत्प्रसिद्ध त्वं युक्तिसिद्धत्वं च प्रसिद्धार्थेन हि-शब्देनाह हीति ॥ ननुस्वयंप्रकाश-

ब्रह्माभिन्नत्वाज्जविस्य कथंतद्विलक्षणावस्थेत्याह अनुशेतइति ॥ तामविद्यामनुसृत्य निद्रितइवशेते। अज्ञानेनावृतस्सन्मुद्रितज्ञाननेत्रोभवतीत्यर्थः ॥ पश्चात्कार्याकारेणस्थितां तामेवजुषमाणइति॥नन्ववविद्याया अनादित्वेनाविनाशित्वादनिर्मोक्षप्रसंगः स्यादित्याह जहात्येनामिति वाक्योत्थात्मसाक्षात्कारेण निवर्तयतीत्यर्थः ॥ त्याज्याचेदविद्या कथंतर्हितामाश्रितवानात्मेत्याशंक्य भोगार्थंह्यविद्याश्रयणं भोगस्य च तयाजनितत्वादिदानींस्वात्म दर्शनप्रयोजनशून्यां मन्यमानोजहा-

T

तीत्याह भुक्तभोगामिति भुक्तो भोगो यया सा भुक्तभोगा इतिविग्रहः । नन्व-विद्यायाजीवस्वरूपांतर्भा वात्कथंजहातीत्युक्तमित्याह अजोऽन्यइति ॥ अजो जीवोऽविद्यातोऽन्यएव नत्वविद्यान्त-र्भावेनजीवत्वं । अविद्यायाजडत्वाज्जीवस्यच चेतनत्त्वाज्जीवोपाधित्वेन स्वीकाराच्चेति ॥ नन्वज्ञानोपाधिक आ-त्मा जीवभावंप्राप्नुवन्ननेकोपि किंन स्यात् । दृश्यन्तेहिदर्पणादावेकस्मि-न्नुपाधौ मुखस्तम्भपुरुषादयोबहव इतिचेन्न । उपाधेरेकत्वेपि विंवानांभे-दात् प्रतिविंवनानात्वं युक्तम् प्रकृतेतु

नविंवनानात्वंततश्चोपाधेरैक्येपि चोपहितोपिएकएवेति ॥ अयंभावः। यं नानाजीववादिन ईश्वरमाहुस्तमेकजीवादिनोजीवं यंचतेशुद्धंतमेकजीववादे ईश्वरमिति । तत्वमसिवाक्येसर्वमते लक्षणसमानेपि परन्तु यथासत्यंज्ञानमनन्तमित्यादि पदेष्वनुपाहितेष्वपि लक्षणातथातत्पदार्थेऽनुपाहितेपि लक्षणा स्वयमूहनीयेति॥नन्वेकस्मिन् वस्तुनि विकल्पासम्भवात् कथं विरुद्धनानामतप्रमाण्यमितिचेन्न॥विभ्रमादेकस्मिन्नपिवस्तुनि वहवोविकल्पाः दृश्यन्ते यथास्थाणौ स्थाणुर्वापुरुषोवाराक्षसो

वेत्यादिविकल्पाद्दृश्यन्ते । ननुकिमत्रहेयं किमुपादेयमित्यतोवार्तिककारा आहुः ययायया भवेत्पुंसो व्युत्पत्तिः प्रत्यगात्मनि ॥ सासैवप्रक्रियाज्ञेया साध्वीसाचानवास्थितेति ॥ १ ॥ इत्येकजीववादः ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्य श्रीपरमानन्दतीर्थभगवत्पादपूज्यशिष्य-श्रीविमला नन्दतीर्थसंगृहीते वेदान्तसिद्धान्तसंग्रहे ऽध्यारोपोनाम प्रथमंप्रकरणं ॥







हरिः ओ३म् तत्सत् ।

श्रीगणेशायनमः ।

# अथापवादप्रकरणमारभ्यते ।



तल्लक्षणंचोक्तंतत्त्वानुसन्धाने अथापवादोनामाधिष्ठाने भ्रांत्याप्रतीतस्य तद्व्यतिरेकेणाभावनिश्चयः । यथा शुक्त्यादौ भ्रांत्याप्रतीतस्य रजतादेः शुक्तिव्यतिरेकेण नेदंरजतं किंतु शुक्तिरित्यभावनिश्चयः । अन्यत्राप्युक्तं । साक्षात्कृतेत्वधिष्ठाने समनन्तरानिश्चितिः ॥ अध्यस्यमानंनास्तीति वाधइत्युच्यतेबुधैः ॥ अयमेव वाधो-

ॐ। ॐ। ॐ।

विलापनमितिचोच्यते ॥ सच वाध-
स्त्रिविधः शास्त्रीयो यौक्तिकः प्रत्यक्ष-
श्चेति ॥ अथातआदेशोनेतिनेति ॥
सर्वंखल्विदंब्रह्म नेहनानास्तिकिंचने-
त्यादिशास्त्रीयोवाधः ॥ १ ॥ मृद्व्य-
तिरेकेण घटाभावनिश्चयवन्निखिल-
कारणीभूतब्रह्मव्यतिरेकेण निखिलप्र-
पंचाभावंनिश्चित्यदृश्यमानस्यमिथ्या
त्वनिश्चयेनब्रह्मात्ममात्रत्वनिश्चयोयौ-
क्तिकोवाधः।२।अहंब्रह्मास्मीति तत्त्वम
स्यादिवाक्यजन्यसाक्षात्कारेणाज्ञानत
त्कार्यनिवृत्तिःप्रत्यक्षवाधः।३।यौक्तिक-
वाधस्यायंक्रमः स्थूलप्रपञ्चं सर्वमपि-

स्थूलभूतेषु विलाप्य तद्व्यतिरेकेण-तन्नास्तीतिनिश्चित्य स्थूलभूतानि समष्टिव्यष्टिसूक्ष्मशरीरंचसूक्ष्मभूतेषु विलाप्य तत्रापि पृथिवीमप्सुविलाप्य अपस्तेजसि तेजोवायौ वायुमाकाशे आकाशमज्ञानेअज्ञानं चिन्मात्रे विला पयेत्॥तथा स्मृतिरपि॥ जगत्प्रतिष्ठा-देवर्षेपृथिव्यप्सुप्रलीयते ज्योतिष्वापः प्रलीयंते ज्योतिर्वायौप्रलीयते वायुश्च लीयतेव्योम्नि तच्चाव्यक्तेप्रलीयते। अव्यक्तंपुरुषेब्रह्मन् निष्कलेसंप्रलीयत इति॥ अथमोक्षस्य वाक्यार्थज्ञानाधी-नत्वात्वाक्यार्थस्य च पदार्थज्ञानाधीन

त्वात्तदर्थमादौ तत्पदार्थं निरूपयामः तत्पदार्थस्य लक्षणंद्विविधं तटस्थलक्षणं स्वरूपलक्षणंचेति ॥ तत्रसृष्टिस्थितिलयकारणत्वं तटस्थलक्षणम् ॥ यतोवा इमानिभूतानि जायन्ते येनजातानिजीवंति यत्प्रयंत्यभिसंविशन्ति इतिश्रुतेः ॥ भगवत्सूत्रकारैरप्युक्तम् जन्माद्यस्य यत इति ॥ यतः यस्माद्ब्रह्मणः सकाशादस्यजगत उत्पत्तिप्रलयादिकं भवति तद्ब्रह्मेति ॥ ननु किमत्रसविशेषस्य लक्ष्यत्वमुतनिर्विशेषस्येति संशये सविशेषस्यैव कुतः जगज्जन्मादिकारणस्य तन्मा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अलक्षणत्वादिति पूर्वपक्षः ॥ सिद्धान्ते अभिन्ननिमित्तोपादानकारणत्वस्य तटस्थलक्षणत्वम् ॥ प्रत्यगभिन्नसच्चिदानन्दाद्वयस्वरूप निर्विशेषब्रह्मणश्च लक्ष्यत्वं यतोवाइमानीति श्रुतितात्पर्य्योद्घाटनेन प्रदर्शितं तैत्तिरीयभाष्यवार्तिके शाखायाम् ॥ अभिन्ननिमित्तोपादानत्वं च यथा जीवितपुरुषस्य स्वकेशलोमादिकमिव यथावा लूतायाः स्वतंतुप्रतीव ॥ अतस्तल्लक्षणलाभः ।उपादानकारणत्ववि-शिष्टकर्तृत्वं अभिन्ननिमित्तोपादानत्वम् ॥ उपादानत्वं च स्वतादात्म्या-

पन्नकार्य्य जनकत्वं॥ निमित्तत्त्वं च कार्य्योत्पादनानुकूलज्ञान शक्तिसम्पन्नत्वमिति॥ ननु तटस्थइत्यत्र वृक्षस्साक्षात्सम्बन्धाभावेपि तटघटितपरंपरासम्बन्धसत्वात्सामीप्याच्च नदीं लक्षयितुं समर्थः। ननु ब्रह्मणि वस्तुतः कारणत्वस्य परंपरासम्बन्धः सामीप्यंवास्तीति चेन्न साक्षात्सम्बन्धाभावेपि चन्द्र शाखान्यायेन परंपरया कल्पितसम्बन्धादपि लक्षकत्वोपपत्तेरिति॥ अतस्तल्लक्षणलाभः॥ कादाचित्कत्वेसति व्यावर्त्तकत्वंतटस्थत्वमिति॥ अत्र निर्विशेषब्रह्मबोधने

लौकिकदृष्टांतः स्वाराज्यसिद्धावुक्तः॥ पृष्टे कोस्मिन्समाजेनरपतिरिति यो- मत्तमातङ्गपृष्ठे मुक्ताजालांतराले शशि धवललसच्छत्रमूले स्फुरन्सः॥ इत्युक्तः पुंविशेषं सपादिपरिचिनोत्येषराजेति- सर्वं मुक्त्वैकं येनपश्यन्नमुमपरविधं सै- षराजेतिवेत्ति॥ दार्ष्टांतोपितत्रैवोक्तः॥ वर्णिता विविदिषादियंत्रणा त्पुंविशे- षमिवलक्षणोक्तयः। विश्वसर्ग विषया- गमाः परं लक्षयंतिनिरवद्यचिह्नमिति। तटस्थलक्षणे यद्यपि तत्वमस्यादिवा- क्यवन्नान्वयानुपपत्तिर्नापिप्रकृष्टप्रका- शशशीतिव दभेदान्वयः। तथाप्युप-

क्रमादिलिङ्गबलात् शुद्धमेव तटस्थ-
वाक्यानि बोधयन्तीतिसिद्धम् ॥ इति-
तटस्थलक्षणम् ॥ अथस्वरूपलक्षणम् ॥
सत्यं ज्ञानमनंतं ब्रह्मेतिस्वरूपलक्षण-
म् ॥ असत्याज्ञानांतत्त्वादिनिवर्त्तकत्वेन
स्वरूपमात्रावबोध कत्वम् ॥ अतश्च
स्वरूपंस द्व्यावर्त्तकं स्वरूपलक्षण-
मिति लक्षणलाभः ॥ तथाचोक्तं संक्षे-
पशारीरके ॥ ब्रह्मेतिशेषिपदमत्रहिल-
क्ष्यमेकं शेषाणिलक्षणसमर्पणमभ्यकु-
र्युः ॥ लक्ष्यार्पणेन सहलक्षणवाचिसर्वं
संगच्छतेऽरुणपदंक्रयवाचिनेव ॥ १७ ॥
सत्यंज्ञानामित्यत्र ब्रह्मपदंशेषि एकं

लक्ष्यं इतराणि सत्यादि पदानि लक्षणवाचकानि कुर्य्युः सम्पादयेयुः॥ ततः लक्ष्यार्पणेनपदेनलक्षण वाचिपदं संगच्छते यद्ब्रह्म तत्सत्यज्ञानाद्यात्मक मितिवाक्यभावेन संगतं भवतीत्यर्थः॥ प्रधानेतरे षामन्वये दृष्टांतमाहअरुणपदेति अरुणया पिङ्गाक्ष्या गवा सोमंक्रीणातीत्यत्र तृतीयांतारुणा दिपदानि क्रयसाधनार्थानिक्रीणातीत्यनेनान्वीयन्ते॥ आरुण्यादिविशिष्टक्रयस्यैव विधेयत्वादिति यद्वत्तद्वदित्यर्थः॥ लक्षणसमर्पणप्रकारोऽपितत्रैवोक्तः तथा च तत्त्वंपदवदत्रापि शवलेंशपरित्या-

गेन शुद्धेजहदजहल्लक्षणैव । शबल पदान्याह ॥ आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ॥ तत्संपर्कात् सत्यता तत्रचान्या व्युत्पन्नोयंसत्यशब्दस्तुतंत्र॥ १७८ ॥ अस्यार्थः ॥ ननुकिंनुतत्सत्यादिवाच्यं शबलं कथंवा तत्र व्युत्पत्तिरिति जिज्ञासायां तदाह ॥ आकाशादौ सत्यतेत्यारभ्याकाशादावस्तितेत्यन्तैः सप्तभिः श्लोकैः ॥ आकाशघटादौ सत्यता व्यावहारिकसत्यता॥ व्यावहारिकसत्यत्वंच परमार्थसत्यत्वात् कल्पितभेदोस्त्येव॥ सत्यंचानृतञ्च स-

त्यममभवदितिश्रुतेः । आकाशादेरात्म
कार्य्यस्यार्थक्रियाकारित्वदर्शनाच्च।
परमार्थसत्यतातिरिक्ताबियदादिसत्य
तास्तीत्यर्थः ॥ प्रत्यङ्मात्रेशुद्धात्मनि
सत्यतापारमार्थिकीसत्यताअन्याऽऽक
शादिसत्यत्वाद्विलक्षणाऽत्यन्ताबाध्या
र्थलक्षणा॥व्यावहारिकसत्यत्वमेकमा-
काशाद्यस्ति परमार्थसत्यत्वञ्च प्रत्य-
ग्रूपमन्यदस्तीत्यर्थः॥ततः किं तत्राह त
त्संपर्कात् । तयोः सत्ययोः परस्परं ता
दात्म्यात् निष्पन्नोतिशेषः ॥ तत्रेन्यञ्
षङ्गः ॥ सत्यता तत्रचान्या समुदाय
त्मिका ॥ ततोपिकिं तत्राह व्युत्पन्नइ

तत्र शबले प्रत्यक्षादिसिद्धे सत्य शब्दस्य व्यवहारानुरोधेन शक्तिग्रहइत्यर्थः ॥ एवमुत्तरत्रापि द्रष्टव्यम् ।१७८।
बुद्धेर्वृत्तौज्ञानतातावदेका प्रत्यग्बोधेज्ञानताकाचिदन्या ॥ तत्सम्पर्काज्ज्ञानतातत्रचान्या व्युत्पन्नोयंज्ञानशब्दस्तुस्तत्र ॥ १७९ ॥ बुद्धेर्वृत्तौचक्षुरादिजन्यांतः करणवृत्तौ ज्ञानता चैतन्याभिव्यञ्जकत्वरूपा ज्ञानता प्रत्यग्बोधे प्रत्यक्चैतन्ये ज्ञानतास्वप्रकाशज्ञानस्वरूपतेत्यर्थः॥ बुद्धेर्वृत्तौतावदानन्दतैका प्रत्यङ्मात्रे काचिदानन्दताऽन्या॥तत्सम्पर्कात्तत्रचानन्दतान्या व्युत्पन्नोयंत-

त्रचानन्दशब्दः ॥ १८० ॥ आका-
शादौनित्यतातावदेका प्रत्यङ्मात्रेनि-
त्यताकाचिदन्या ॥ तत्सम्पर्कान्नित्य
तातत्रचान्या व्युत्पन्नोयंनित्यशब्द-
स्तुतत्र॥१८१॥ आकाशादौशुद्धताता
वदेका प्रत्यङ्मात्रेशुद्धताकाचिदन्या
तत्सम्पर्काच्छुद्धतातत्रचान्या व्युत्प-
न्नोयंशुद्धशब्दस्तुतत्र ॥ १८२ ॥ आ-
काशादौशुद्धताऽस्पृश्यतादिरूपा॥गो-
वत्सादौमुक्ततातावदेका प्रत्यङ्मात्रे-
मुक्तताकाचिदन्या ॥ तत्सम्पर्कान्मु-
क्ततातत्रचान्या व्युत्पन्नोयंमुक्तशब्द-
स्तुतत्र ॥ १८३ ॥ आकाशादावास्ति-

तातावदेका प्रत्यक्त्वेचास्तितताकाचिदन्या ॥ तत्सम्पर्कादस्तितातत्रचान्या व्युत्पन्नोयंतत्रचास्तीतिशब्दः ॥ १८४ ॥ योयश्शब्दो यत्कृतेर्थेनिरूढस्तत्रैवार्थेलक्षणावृत्तिरस्य ॥ वक्तव्यास्यात्पण्डितैरेवमेतत् प्रत्यक्पूर्णब्रह्मवेदान्तवेद्यम् ॥ १८५ ॥ नचात्रनीलोत्पलवत् विशिष्टसंसर्गान्वयवाचकत्वं किंतुवक्ष्यमाणप्रातिपदिकार्थमात्राखण्डार्थत्वम् । इतितत्पदार्थः ॥ अथत्वंपदार्थनिरूपणम् ॥ शुद्धचिन्मात्रप्रत्यक्कूटस्थचैतन्यं त्वंपदार्थः ॥ तथा च श्रुतिर्बृहदारण्यकोपनिषदि ॥ कतम-

आत्मेति योयंविज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानस्सन्नुभौलोकावनुसञ्चरातिध्यायतीव लेलायतीव सहिस्वप्नोभूत्वेमंलोकमतिक्रामति मृत्योरूपाणि ॥ ६ ॥ समानः सन्नित्यत्रपूर्वोक्तकर्तृकरणक्रियाकर्मचेत्युपाधिचतुष्टयेन सह अनाद्यविद्यया तादात्म्यंप्राप्तसन्नुभौ इहलोकपरलोकौ अनुसञ्चरति गच्छतीव प्रतीयते ध्यायंत्याञ्चबुद्धयां ध्यायतीवात्माप्रतीयते नतुस्वतः ॥ स्वतस्तु कूटस्थप्रत्यक्शुद्धचिन्मात्रम् ॥ तथा च भगवद्वचनं ॥ प्रकृतेः क्रियमाणानि

गुणैः कर्माणिसर्वशः अहङ्कारविमूढा-
त्मा कर्त्ताहमितिमन्यते ॥२७॥ अन्य-
त्राप्युक्तम् ॥ उपाधिरन्तः करणंत्वम-
र्थे जीवत्वमाभासनमत्रतद्वत् ॥ तद-
न्वितांचित्प्रतिविंम्वमेव मनान्वितांता-
मिहाविम्वमाहुः ॥ २ ॥ तां शुद्धां प्रमा-
तृत्वादिधर्म्मविशिष्टां अन्तःकरणोप-
हितां प्रतिविम्वंजीवत्वंचाहुः ताम-
तामेवानुपहितां विम्वं शुद्धं चाहुर्विद्वां-
सइति ॥ तथा वार्तिककारैरप्युक्तम् ॥
बुद्धेःस्यादपराधोयं यद्वाह्यार्थानुका-
रिता ॥ प्रत्यक्त्वंचिन्निभत्वं च कौट-
स्थ्यान्ना यमात्मनि ॥ ५ ॥ अन्वय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ॥ बाह्यांनिरस्यधीरूपं चिन्मात्रात्मावशेषयेत् ॥ इतित्वंपदार्थः ॥ अथब्रह्मात्मैक्यतत्त्वसाक्षात्कारहेतु भूता वाक्यकरणिका शाब्दीप्रमानिरूपणम् ॥ आकांक्षायोग्यतासन्निधिमत्पदसमुदायो वाक्यम् तत्त्वमसि अहंब्रह्मास्मि प्रज्ञानं ब्रह्मेत्यादि ॥ अन्वयानुपपत्तिराकांक्षा॥वाक्यार्थावाधोयोग्यता॥अविलम्बेनोच्चारणंसन्निधिः॥अव्युत्पन्नस्य संगतिग्रहाभावा न्नतस्यवाक्यजन्य प्रमोत्पद्यते॥पदपदार्थयोःस्मार्यस्मारकभावःसंगतिः ॥ सा द्विधा शक्तिर्लक्ष

णाचेति ॥ शक्तिर्नाम मुख्यावृत्तिः पद पदार्थयोर्वाच्यवाचकभावसम्बन्धइति यावत् ॥ सा च द्विधा योगारूढिश्चेति ॥ अवयवशक्तिर्योगः प्रकृतिप्रत्ययार्थयोः सम्बन्धेन शब्दस्यार्थेषु वर्तनमितियावत्॥यथापाचकादिपदानाम्॥ रूढिः समुदायशक्तिः प्रकृतिप्रत्ययार्थयोः सम्बन्धेन विना शब्दस्यार्थेषु वर्तनमितियावत् ॥ यथा घटादिपदानां ॥ साचशक्ति॰र्व्यवहारादिनागृह्यते॥ वेदान्तनये योग्येतरान्वितेथैशक्तिः वेदान्तेषु सर्वत्रब्रह्मैवान्वितं ॥ सर्ववेदा-

१ तथाचोक्तम् ॥ शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदंति सानिध्यतः सिद्धपदस्य वृद्धाइति । ५ ।

यत्पदमामनन्ति ॥ तंत्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतेः तत्तु समन्वयादितिसूत्रञ्च अस्यार्थः। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तद्ब्रह्म सर्वज्ञं सर्वशक्तिजगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कुतः समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि ब्रह्मणि षड्विधलिङ्गतात्पर्येण समनुगतानि। अतएव ब्रह्मैवसर्वत्रानुगतमित्यर्थः ॥ १ ॥ लक्षणा शक्यसम्बन्धः साचत्रिविधा जहल्लक्षणा ऽजहल्लक्षणा जहदजहल्लक्षणाचेति ॥ शक्यार्थपरित्यागेन तत्सम्बन्ध्यर्थांतरे वृत्तिर्जह-

T

ल्लक्षणा ॥ यथागंगायांघोषइत्यत्र गंगापदस्य तीरे शक्यार्थापरित्यागेन तत्सम्बंध्यर्थांतरेवृत्तिरजहल्लक्षणा ॥ यथाशोणोधावतीत्यत्र शोणगुणविशिष्टाश्वादिद्रव्येषु ॥ शक्यैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा यथासोऽयंदेवदत्तइत्यादौ साचाग्रेविस्तरेण वक्ष्यते तात्पर्यमपि शाब्दबोधेकरणं तच्चाद्विविधं शब्दतात्पर्यं वक्तृतात्पर्यंचेति तत्रशब्दतात्पर्यं तदर्थप्रतीतिजननयोग्यत्वं तदेव शाब्दबोधेकरणं नतुवक्तृतात्पर्यं तस्यशुकादिशब्दे व्यभिचारादिति ॥ वेदान्ते ता-

च्यार्थेशवलपदेशक्तिग्रहः शुद्धाधिष्ठाने लक्षणा॥ तथाहि मायादिसमष्टिस्तदुपहित चैतन्यं॥ एतदाधारानुपहितचैतन्यं तप्तायः पिण्डवत् ॥ एतत्त्रयं अविविक्तमेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति ॥ विविक्तमखण्डचैतन्यं तत्पदलक्ष्यार्थो भवति अविद्यादिव्यष्टिरेतदुपहितचैतन्यं एतदाधारानुपहितं प्रत्यक्चैतन्यं एतत्त्रयं तप्तायःपिण्डवदविविक्तंसदेकत्वेनावभासमानं त्वं पदवाच्यार्थो भवति ॥ विविक्तं प्रत्यक् चैतन्यं त्वंपदलक्ष्यार्थो भवति प्रातिलोम्येन सच्चिदानन्दलक्षणतयाऽज्ञाति-

T

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकाशतइतिप्रत्यक्॥ प्रत्यक्च ततैचैत-न्यं प्रत्यक्चैतन्यं चेतनस्यभावः चैतन्यं ज्ञप्तिस्वरूपमित्यर्थः ॥ एतौ लक्ष्यार्थावुपादाय सम्वन्धत्रयेण साहितं तत्त्वमस्यादिवाक्यं लक्षणयाऽखण्डार्थवोधकं भवति तथाचोक्तम् ॥ स्वराज्यासिद्धौ ॥ वाधा[1] ध्यास[2]विशेषणैक्यविषयंनाम्न[3]श्चतुर्धा मतं सामानाधिकरण्यमाद्यमिहनऽ्यर्थोद्यमास्याच्छ्रुतिः ॥ ध्यानाद्यश्रवणादनित्यफलतादोषाच्चनाध्यासधी स्तादात्म्यं नविरुद्धयोरितिवलाद्धस्त्वै[4]क्यपक्षास्थितिः॥

---

१ वाधः स्थाणौपुरुषइत्यादौ ।२ अध्यासः मनोब्रह्मे त्युपासीतेत्यादौ ॥ विशेषणं दण्डिपुरुष इत्यादौ। ३ नांम्नः समानाविभक्तिक पदस्य। ४ ऐक्य विषयोऽखण्डार्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३९ ॥ परोक्षानवाप्तत्वबुद्धिंपरास्मिन्न पूर्णत्वदुःखित्वमोहंप्रतीचि ॥ निहंतुं निजालौकिकंचात्मतत्त्वं पदेवक्तुमन्योन्यतः साभिलाषइति ॥४४॥ सम्बन्धत्रयंतुपदयोः सामानाधिकरण्यं सामानाधिकरण्यं नामभिन्नप्रवृत्तिनिमित्तानां शब्दानां एकस्मिन्नर्थेवृत्तिः॥ यथासोयंदेवदत्तइत्यत्र तत्कालविशिष्टदेवदत्तवाचकसशब्दस्य एतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य च एकस्मिन्देवदत्तपिण्डेवृत्तिः सामानाधिकरण्यम् ॥ पदार्थयोर्विशेषणविशेष्यभावः॥ यथा तत्रैव सशब्दार्थतत्काल-

विशिष्टायंशब्दार्थैतत्कालविशिष्टयो-रन्योन्यभेदव्यावर्तकतया विशेषण विशेष्यभावः ॥ सोयं अयंसइतिपद-योरर्थयोर्वा अविरुद्धवाक्यार्थेन सह लक्ष्यलक्षणभावः ॥ यथा तत्रैव सोय-मित्यादि वाक्ये सशब्दायंशब्दयोस्त-दर्थयोर्वाऽविरुद्धेनदेवदत्तपिण्डेन वा-क्यार्थेनलक्ष्यलक्षणभावः॥ तथा तत्त्व-मस्यादिवाक्ये तत्त्वंपदयोः परोक्षत्वा-परोक्षत्वविशिष्टेश्वरजीववाचकयोरख-ण्डचैतन्ये तात्पर्येण वृत्तिः सा-मानाधिकरण्यं ॥ तथातत्त्वंपदार्थ-योरीश्वर जीवयोरन्योन्यभेदव्या-

र्वतकतया तत्त्वमसि त्वंतदसि इतिविशेषणविशेष्यभावः ॥ तथा तत्त्वं पदयोस्तदर्थयोर्वाक्यार्थेनाविरुद्धाखण्डचैतन्येन सह विरुद्धांशपरित्यागेन लक्ष्यलक्षणभावः तदुक्तं सामानाधिकरण्यं च विशेषणविशेष्यता ॥ लक्ष्य लक्षणभावश्च पदार्थप्रत्यगात्मनामिति ॥ अस्यार्थस्तूक्तएव ॥ एतदभिप्रायेण वाक्यवृत्तावप्युक्तं भाष्यकारैः ॥ तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने लक्ष्यौतत्त्वंपदार्थौद्वावुपादाय प्रवर्तते॥ तादात्म्यप्रतिपादनेऽखण्डस्वरूपप्रतिपादने तथा॥ संसर्गोवाविशिष्टोवा वा-

क्यार्थोनात्रसम्मतः ॥ अखण्डैकरसत्वेन वाक्यार्थोविदुषांमत इति संसर्गस्यवा विशिष्टस्यवा विशिष्टैक्यस्य वा प्रत्यक्षादिविरुद्धत्वेन तत्त्वमस्यादि वाक्यार्थप्रतिपाद्यत्वायोगात् ॥ संसर्ग विशिष्टान्वयत्वं च नीलोत्पलादौ बोध्यं अत्रतत्त्वंत्वं तदित्यभेदसंसर्गःब्रह्म विशिष्टोजीवः जीवविशिष्टंब्रह्मेतिविशिष्टः ॥ मायाविशिष्टचैतन्यविशिष्टान्तःकरणविशिष्टचैतन्य मितिवैशिष्टैक्यम् ॥ एतेषां वाक्यार्थानां नात्रसम्भवः ॥ अखण्डार्थमेव ॥ अखण्डत्वं नाम सजातीयविजातीय स्व-

गतभेदशून्यत्वं ॥ सर्वस्य प्रपञ्चस्य ब्रह्मव्यतिरिक्तस्य कल्पितत्त्वे मिथ्यात्वाद्विजातीयभेदशून्यता ॥ जीवपरमात्मनोरत्यन्तैक्यात् सजातीयभेदशून्यता ॥ अथवात्रिविधपरिच्छेद शून्यत्वमखण्डत्वं॥विभुत्वाद्देशपरिच्छेद शून्यत्वम् ॥ नित्यत्वात्कालपरिच्छेदशून्यत्वम्।सर्वात्मकत्वाद्वस्तुपरिच्छेदशून्यत्वम् ॥ तथा च श्रुतिः वेदाहमेतमजरंपुराणं सर्वात्मकं सर्वगतं विभुत्वादित्यादि ॥ यद्वा अपर्यायानेकशब्दप्रकाश्यत्वेसति अविशिष्टत्वमखण्डत्वं।तदुक्तंकल्पतरौ॥अविशिष्टमपर्याया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेकशब्दप्रकाशितम् ॥ एकंवेदान्तनि-
ष्णाताअखण्डंप्रतिपेदिरेइति॥एवंतत्त्व-
मस्यादि वाक्यजन्याऽखण्डाऽपरोक्ष-
ज्ञानादज्ञाननिवृत्तिरानन्दावाप्तिश्चभव-
ति।तदुक्तंभाष्यकारैः॥प्रत्यक्बोधोयआ
भाति सोऽद्वयानन्दलक्षणः।अद्वयानन्द
रूपश्च प्रत्यक्बोधैकलक्षणः ॥ इत्थम-
न्योऽन्यतादात्म्य प्रतिपत्तिर्यदाभवेत्॥
अब्रह्मत्त्वंत्वमर्थस्य व्यावर्त्येततदैवहि।
तदर्थस्यचपारोक्ष्यं यद्येवंकिंततः शृणु
पूर्णानन्दैकरूपेण प्रत्यक्बोधोऽवतिष्ठ-
ते॥ इत्यन्योऽन्यतादात्म्यप्रतिपत्तेः॥
अहंब्रह्मास्मीति ब्रह्मैवाहमस्मीत्यख-

ण्डाकारवृत्तिः॥तयावृत्त्याऽज्ञाने निवृत्तेऽहंब्रह्मत्वपरोक्षत्वादीनां निवृत्तत्त्वात्प्रत्यगात्मन अखण्डानन्दाऽवस्थितिर्भवतीति श्लोकतात्पर्यार्थः ॥ तथानिर्विशेषाऽखण्डार्थप्रतिपादने स्वराज्यसिद्धौदृष्टान्तः॥ असंसर्गिसत्यार्थतास्यात्पदानामनन्यार्थतावाप्यखण्डार्थतात्र॥प्रसिद्धाह्यसौवाक्यमात्रप्रबोधात्प्रकृष्टप्रकाशश्शशीत्यादिवाक्ये॥४५॥ प्रकृष्ट प्रकाशत्वचन्द्रत्वयोग[1]व्यवच्छेदभेदादयोनैवपृष्टाः॥ नवाशाब्दधीरस्यजिज्ञासितेर्थे ततोवाक्यतश्चन्द्रमात्र

[1] व्यवच्छेदभेदादयः अन्यताराणनिष्ठसंसर्गादिः।

प्रबोधइति ॥ एवंतत्त्वमसित्वंतदसि॥इ-
तिगुरुणाबोधितेसत्यहंब्रह्मास्मीति सा-
क्षादपरोक्षाऽनुभववाक्यार्थउदेति तेन-
पुरुषः कृत्यकृत्योभवति ॥ यस्यत्वेवं
श्रुतोपिवाक्यार्थेनसाक्षात्कारः ॥ तस्य
पुरुषापराधोज्ञातव्यः ॥ अतएवपुरुषा-
पराधयुक्तस्य यथा पित्तदूषितरसनस्य
सितामश्नतो मधुरत्वेनजानतोपिनमा-
धुर्यनिमित्ततृप्तिविशेषोत्पत्तिः ॥ कुतः
पित्तदोषेण माधुर्यसाक्षात्काराभावात्
तथाऽहंब्रह्मास्मीति साक्षात्शास्त्रतश्च
जानतोपि नतत्प्राप्तिरूपंकर्तृभोक्तृत्व-
बन्धरहितं ब्रह्मानन्दफलं तस्यप्रतीय-

तइति युक्तमस्यपुरुषापराधयुक्तत्वम् ॥ पुरुषाऽपराधश्चोक्तस्सर्वज्ञमुनिभिः ॥तथाहि॥पुरुषाऽपराधमलिनाधिषणानिरवद्यचक्षुरुदयापियथा॥नफलायमच्छुविषयाभवति श्रुतिसम्भवापितुतथात्मनिधीयः॥१४॥पुरुषापराधविगमेतुपुनः प्रतिबन्धकव्युदसनात्सफला ॥ मणिमन्त्रयोरपगमेतुयथापावकाद्भवतिधूमलताइति ।१५। अस्यार्थः ननुनिर्दुष्टप्रमाणजन्यं ज्ञानमप्रमाण्यशंकावशादध्यासं ननिर्वर्त्तयतीति क्वदृष्टमित्याशंक्य दृष्टान्तमाह पुरुषेति ॥ मच्छुर्नाम

१ निष्प्रतिबन्धलताकारोधूमउत्पद्यते इत्यर्थः ॥

कश्चित्कस्याचिद्राज्ञोऽत्यन्तवल्लभोब्रा-
ह्मणोराजोपजीविभिर्मात्सर्यात द्विष्य-
माण आसीत् सकदाचिद्दैवयोगा-
न्नेत्रे पिधायारण्येक्षिप्तश्चिरं तत्रस्थितो-
दैवयोगेनारण्यैकस्सह पुरसमीपमा-
गतोपि विद्वेषिराजकीयावरुद्धमार्गः
पुरंप्रवेष्टुं न शशास राजाच मर्छुर्मृतः
प्रेतोजात इतितैः प्रवोधितस्सन् तथैव
निश्चयमकरोत ॥ दैवात्कदाचिद्वहि-
र्गतो वाह्योपवनं तं दृष्ट्वापि ब्रह्मराक्षसं
मेने निरवद्यानिश्चितचक्षुर्विषयेपि जाते
यथा प्रेतभयात् राजानश्श्रद्दधानः
तथामहावाक्यजन्याप्रमाणभूताप्यहं-

ब्रह्मास्मीतिधी वेंदान्ताः साक्षातब्रह्म-
बोधयन्ति नवा संसारिजीवः परमा-
त्मा सम्भवति नवेति संदिहानः क-
र्मठद्वैतवादिभिः सहवर्तमानः पूर्वक्त-
त्यनाशभयात् अयमहमस्मि परं-
ब्रह्मेति ज्ञानेन श्रद्धावान् अयमेवपु-
रुषापराधः सच बहुविधः। तथाहि॥
असम्भावना विपरीतभावना विषया-
शक्तिः प्रज्ञामाद्यं कुतर्काऽश्रद्धादिभे-
दात् षड्विधः॥ तत्र असम्भावनाद्वि-
विधा। प्रमाणगताऽसम्भावना प्रमे-
यगताऽसम्भावनाचेति तत्र ( प्र-
माणगतः संशयः ) प्रमाणगता

T

ऽसम्भावना यथा वेदान्ताःशुद्धात्मानं बोधयन्तिनवाविधिनियोज्यतयाबोधयन्ति स्वतन्त्रंवा मुक्तिफल मर्पयन्ति नवेत्यादि ॥ तेच संशयाःशारीरकप्रथमाध्यायेभाष्यकारै र्निराकृताः। तदर्थंच सिद्धवत्कृत्योक्तंसंक्षेपशारीरकेश्लोकेतिसिद्धमवबोधयितुञ्चवाक्यं शक्नोतिकार्यरहितं वदितुञ्च वाक्यं शक्नोत्यखण्डमवबोधयितुं च वाक्यं शक्नोति मुक्तिफलमर्पयितुं च वाक्यमिति॥ एते सर्वे संशयाः श्रवणेन प्रामाण्यानिश्चयेन च निवर्तन्ते श्रवणादिकं चोक्तम्
शब्दशक्तिविषयं निरूपणं युक्तितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रवणमुच्यते बुधैः ॥ वस्तुतत्वविषयं निरूपणं युक्तितोमननमित्युदीर्य्यते ॥ चेतसस्तु चितिमात्रशेषता ध्यानमित्यभिवदन्ति वैदिकाः ॥ अंतरंगमिदमित्थमीरितं तत्कुरुष्व परमात्मबुद्धये इति ॥ प्रामाण्यं तु तद्वति तत्प्रकारकत्वम् ॥ ७७ ॥ तच्च वेदान्तनयेवृत्तेः साक्षिभाष्यत्वात् स्वतस्त्वप्रामाण्यम् ॥ प्रमेयगताऽसम्भावनापिद्विविधा जीवात्मगतपरमात्मगतभेदात् ॥ तत्र ब्रह्मसद्वितीयं अद्वितीयं वा अद्वितीयत्वेपि आनन्दगुणकं आनन्दस्वरूप वेत्यादि परमात्मगताः संशयाः ॥

जीवस्य परमात्मना सहैक्यं सम्भवति न वा ॥ ऐक्येपि तज्ज्ञानं मुक्तिसाधनं नवेत्यादि जीवात्मगतसंशयः॥ अयञ्च मननेन तर्कात्मकेन निवर्तते ॥ विपर्ययस्तु अतस्मिंस्तद्बुद्धिस्फुरणं यथाश्रुतेपि वेदान्ते पुनः पुनर्देहादिष्वात्मबुद्धिस्फुरणं जगत् सत्यत्वबुद्धिस्फुरणं च तच्च विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहरूपात्मकेन निदिध्यासनेन निवर्तते ॥ अस्य संशयविपर्यययुक्तस्य भगवतैवोक्तं बहु कष्टम् ॥ ३ ॥ गीतायां तथाहि अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।

ॐ

नायं लोकोस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥ तयोर्मध्ये अज्ञस्य तु मोक्षसुखस्यैव प्रतिबन्धः संशयात्मनस्तु भोगकाले मोक्षसाधनेषु रुचिः मोक्षसाधनकाले भोगेषु प्रीतिरित्युभयलोकसुखंनश्यति ॥ विषयाशक्तेः पुरुषापराधत्वं कठोपनिषदि उक्तम् ॥ पराञ्चिखानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् ॥ कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ॥ अथ धीरा अ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥ तथाध्यायतोविषयानित्यारभ्य बुद्धिनाशात्प्रणश्यतीत्यन्तेन भवता महज्ज्ञानहानिकरत्वं विषयाशक्तेः प्रदर्शितमित्यतो मुख्यज्ञानसाधनैः श्रवणादिभिर्निरस्तव्यामुमुक्षुभिः तथाचोक्तं भाष्यकारैः॥ सच्छ्रद्धया यः श्रवणादिनिष्ठोरजस्वभावं स धुनोति बुद्धेः इति । वार्तिककारैरप्युक्तम् ॥ सन्नियम्येन्द्रियग्रामं बुद्ध्या वारोप्य निश्चलम् ॥ विषयांस्तत्स्मृतींस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः॥एषोऽभ्युपायः सर्वत्र वेदान्तेषु प्रतिष्ठितः ॥ तत्त्वमस्यादि

वाक्योत्थज्ञानोत्पत्त्यर्थमादरात्॥ प्रज्ञामांद्यं तु गुरुभक्त्या ईश्वरोपासनया च नश्यति। तथा चोक्तम् ॥ यथाखनन् खनित्रेण नरोवार्य्यधिगच्छति ॥ तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छतीति १ कुतर्कास्तु श्रोत्रियतत्त्वनिष्ठाविद्वद्भिःसह तत्सङ्गेन निवर्तन्ते॥ गुरुवेदान्तवाक्येषु विश्वासात् दृढमुमुक्षया चाऽश्रद्धा नश्यति॥ एवं पुरुषापराधरूपसकलप्रतिबन्ध क्षयेसति करतलामलकवत्साक्षादपरोक्षं विज्ञानं कर्तृत्वादिभावरहितं राजते तथा चोक्तं भाष्यकारैः यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र न

शोकमोहता ॥ तयोरभावेन हि जन्म कर्म्म वा'भवेदयं ब्रह्मविदां विनिश्चय- इति वार्तिककारपादाअप्याहुः ॥ यः पश्येत् सर्वगं शान्तमानन्दात्मानम- व्ययं। न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वा- वशिष्यते ॥ कृतकृत्योभवेद्विद्वान् जी- वन्मुक्तोभवेत्सदेति ॥ विमुक्तश्चविमु- च्यते ॥ ब्रह्मविदाप्नोति परम्। नतस्य प्राणाह्युत्क्रामन्तीत्यादयः श्रुतयः ॥ आप्नोतीत्यत्र न स्वर्गाद्यपूर्वप्राप्तिवत्त प्राप्तिः किन्तुविस्मृतकंठमणिवत्पूर्वसि- द्धस्यैवात्मनअज्ञाननिवृत्त्या स्मृतिमा- त्रम् ॥ तथा च वार्तिककारपादाआहुः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ॥ ब्रह्मास्मीति धिया शेषा ह्यहंबुद्धिर्निवर्तते ॥ १ ॥ राजसूनोः स्मृतिप्राप्तौ व्याधभावोनिवर्तते॥तथैवचात्मनोज्ञस्य तत्त्वमस्यादिवाक्यतः ॥ २ ॥ अन्यदृष्टाविवातोऽत्र न नियोगोमनागपि॥ मोहप्रध्वंसमात्रेण निवृत्ते रोगहानिवत् ॥ ३ ॥ ननु विध्यभावे कथं शब्दप्रवृत्तिरित्याह॥माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति ॥ सुषुप्तइव निद्राया दुर्बलत्वाच्च बाध्यते ॥ ४ ॥ आत्मनः क्रियाफलशालित्वोत्पत्त्यादि फलविलक्षणत्वेनापि न ज्ञाने विधिरि-

T

त्याह ॥ उत्पत्तिराप्तिर्विकृतिः संस्कृति-
श्च क्रियाफलम् ॥ मुक्तिर्विलक्षणैतेभ्य-
स्तेनेहानर्थकोविधिः ॥ ३ ॥ केचित्तु प्र-
त्यगात्मैव ज्ञाता कर्ता चेत्याक्षते तान्
प्रत्याह ॥ बुद्धेःस्यादपराधोऽयं यद्वाह्या-
र्थाऽनुकारिता॥ प्रत्यक्त्वं चिन्निभत्वं च
कौटस्थ्यान्नायमात्मनि ॥ ५५ ॥ वि-
षयाकारेणात्माकारेण च परिणामोबुद्धे-
रेव सिद्ध्यति नत्वात्मनि परिणामोयु-
ज्यते ॥ तस्य कूटस्थत्वादित्यर्थः ।५५।
विपक्षे दोषमाह॥ कर्तृतां प्रत्यगालिंग्य
योऽकर्तात्मानमीप्सति॥उल्कापिशाचं
सोऽभ्येति शीतार्तः पावकेच्छयेति॥ब्र-

ह्मविदोऽपि भिक्षाटनादौ कर्तृत्वोपलब्धेर्ज्ञानाभ्यासं प्रति कर्तृत्वेन प्रतीतेश्च विचारमन्तरेण ध्याननियोगात्॥ ज्ञानाऽभ्यासबलेनाऽकर्तृब्रह्मप्राप्तिरित्याशङ्क्याह कर्तृतामिति ॥ प्रत्यगात्मनि कर्तृतां परमार्थभूतां गृहीत्वा ब्रह्मणश्चाऽकर्तृभोक्तृत्वेन गृहीतुं योऽपेक्षते सपारमार्थिककर्तृत्वादिनिवृत्त्ययोगात् नानर्थान्निवर्तते ॥ न च ब्रह्मप्राप्नोति ॥ यथाशीतार्तः शीतापहरणबुद्ध्यावह्निमिच्छन् उल्कापिशाचमनुगच्छन् नशीतनिवृत्तिंप्रतिपद्यते तस्याऽनग्नित्वादनर्थं च प्राप्नोति॥समी

पसुपसृप्तस्य पिशाचेन भक्ष्यत्वसम्भवात् ॥ तथात्रापिद्रष्टव्यं॥प्रत्यगात्मनि कर्तृत्वभोक्तृत्वादीनामविद्याध्यस्तत्वात्तस्य चज्ञानस्वरूपत्वात्तस्मिन् कर्तृत्वारोपे नाध्यासनिवृत्तिः प्रत्युताध्यासान्तरमाप्नोति॥ अतश्च मुख्याधिकारिणोव्युत्पन्नस्य कृतोपास्तेश्च वेदान्तमहावाक्यश्रवणमात्रेण साक्षात्कारः ॥ यस्य पुनः प्रतिबन्धस्तस्य प्रसंख्यानात्मकविचारेण साक्षात्कार इति न ज्ञाने विधिर्ध्याननियोगोवा ॥ यत्तु ब्रह्मविदोभिक्षाटनादौ प्रवृत्तिस्तद्बाधितानुवृत्त्या॥ ध्यानं तस्यतु याद्द-

च्छिकम् ॥ अविद्याध्यासनिवृत्तौ प्रमाताप्रमाणप्रमेयप्रमितिश्चेति पदार्थचतुष्टयस्य निवृत्तत्वात् ॥ तदनन्तरं कस्याप्यवच्छेदकस्याऽभावात् ॥ कवलीकृताविद्या तत्कार्यस्य विदुषः ब्रह्ममात्रावशिष्टत्वात् ॥ नकिंचिदपि कर्तृत्वादिकमस्तीति सिद्धम् ॥ तदुक्तम् तत्रैव ब्रह्मवल्लीवार्तिके एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते ॥ निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् ॥४॥ नन्वज्ञातं ब्रह्म ज्ञायते ॥ बद्धोजीवः प्रतीतं चाऽज्ञानादिजगन्निवर्ततइत्यतोब्रह्मणः कर्मत्वं जीवस्य ज्ञानं प्रतिकर्तृ-

T

त्वं च स्यात् ॥ कथमुच्यते प्रमात्रादिनिवृत्तीत्याशंक्याह एवमिति॥एवं पूर्वोक्तमज्ञानहानिमात्रतः विस्मृतकंठाभरणवत् ॥ प्राप्तप्राप्तिरिवास्य प्राप्तिरित्यतोन कर्मकर्तृत्वादिविरोधः ॥ ब्रह्मैव सन् ब्रह्माप्नोति ॥ प्रज्ञानं ब्रह्म विमुक्तश्च विमुच्यते ॥ इत्यादिशास्त्रप्रतिपाद्यत्वादस्यार्थस्येति शपथपूर्वकं जगर्ज त्रिरिति ॥४॥ अवशिष्टं स्वतोबुद्धं शुद्धं मुक्तं ततोभवेत्॥नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥ ५ ॥ सकार्याविद्यानिवृत्तौ किमवशिष्यते तदाह ॥

१ ततः कर्तृकर्मविरोधात्.

अविशिष्टमिति ॥ यथोक्तस्य वस्तुनो- ऽवशिष्टत्वे॥तत्र नियोगभावनयोरन्य- तरापेक्षा मानांतरापेक्षावानावतरतीति प्रस्तौति नातइति।भावनाशब्देन नियो- गोऽपि गृह्यते ॥ नित्यत्वादुक्तस्य मुक्ति- रूपस्य वस्तुनोनियोगभावनयोरपेक्षा न युक्ता ॥ बुद्धत्वान्मानान्तरं प्रत्यपि नापेक्षा तत्र सिद्ध्यतीत्यर्थः।८॥तथा च॥ प्रमाता च प्रमाणं च प्रमेयोनिश्चिति- स्तथा।यत्सान्निध्यात्प्रसिद्ध्यन्तितत्सि द्धौ किमपेक्षते॥११॥तथा चश्रुतेः॥ न निरोधोनचोत्पत्तिर्नसिद्धोन च साध- कः॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमा-

र्थतेति ॥ अतश्च ब्रह्माऽभिन्नत्वाद्विदु-
षोन कोऽपिविधिर्निषेधोवा सम्भवति॥
देहाभिमानशून्यतया कर्तृत्वाभिमा-
नाऽभावेन तस्य विधिकिंकरत्वाऽयोगा
त् तथाच शारीरकसूत्रम्॥अनुज्ञापरि-
हारोदेहसम्बन्धाज्ज्योतिरादिवदिति॥
अ० २। पा० ३ सू०। ४९ अस्यार्थः॥
यद्यात्मा ब्रह्मस्यात्तर्हि अनुज्ञापरिहारौ
निर्विषयौ स्यातामिति चेन्न ॥ देह-
सम्बन्धात् ॥ स्वर्गकामोयजेत॥ सदृ-
शीं भार्यामुपेयादित्यादिविधिरनुज्ञा॥
ब्राह्मणं न हन्यात् ॥ गुर्वंगना नोपग-
च्छेदित्यादि परिहारः॥एतौ अनुज्ञाप-

रिहारौविधिनेषधस्याऽपरपर्यायौ देहाभिमानादात्मनोऽब्रह्मत्वज्ञानदशायामुपपद्येते ॥ ज्ञानदशायां देहाभिमानाभावात्तदुभयं नास्त्येव ॥ ज्योतिरादिवदिति दृष्टान्तः ॥ यथाऽग्निः श्मशानसम्बद्धःपरिहीयते । अन्यस्तूपादीयते यथावा पुरीषं मनुष्यशरीरसम्बन्धिपरित्यज्य ते गवां शरीरसंबन्ध्युपादीयते ॥ तस्य पवित्रत्वात् ॥ तावद्देहाभिमानिनोऽनुज्ञापरिहारौ ॥ तद्रहितस्य ज्ञानिनः किमपि कर्तव्यं नास्तीति ॥ नह्यस्य कृताऽकृते तपतइत्यादि श्रुतिः ॥ यस्त्वात्मरतिरेव स्या-

T

दात्मतृप्तश्च मानवः ॥ आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यतइत्यादिस्मृतिश्च॥आत्मनि वास्तवीकर्तृत्वादिस्फुरणे तस्य मुक्तिरपि दुर्घटेत्याह वार्तिककारः ॥ आत्मा कर्त्रादिरूपश्चेन्माकांक्षीस्तर्हिमुक्तताम्॥ नहिस्वभावोभावानां व्यावर्तेतोष्णवद्रवेः ॥ १ ॥ ईशेशितव्य सम्बंधः प्रत्यगज्ञानहेतुजः सम्यग्ज्ञानेतमोध्वस्ता वीश्वराणामपीश्वरइति ॥ ईश्वराणामपीश्वरः शुद्धाऽधिष्ठानरूपः ॥ एवं सञ्चितकर्मणां निवृत्तिः॥ तदाश्रयस्यान्तः करणस्य दग्धत्वात् ॥ आगामिकर्मणां पुष्क-

रपलाशवदश्लेषः ॥ विदुषः कर्तृत्वाभिमानाभावात् ॥ प्रारब्धकर्मणां भोगादेवक्षयः॥तथाच शारीरकसूत्रम् ॥तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात॥अ०४पा०१ सू० १३॥ अस्यार्थः ॥ तदधिगमे तस्यब्रह्मणः अधिगमे साक्षात्कारे सति उत्तर पूर्वाऽघयोः आगामिसञ्चितपापयो रश्लेषविनाशौ भवतः ॥ कुतः तद्व्यपदेशात श्रुतिप्रामाण्यात् ॥ तथाच । तद्यथापुष्करपलाश आपोन श्लिष्यन्ते॥ तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत इति यथैधांसि समिद्धोग्निर्भस्मसात्कु-

T

रुतेऽर्जुनेत्यादिस्मृतिश्च ॥ एवं पुण्यस्यापिनिवृत्तिः ॥ नन्वस्त्वेवमविद्यातत्कार्यनिवृत्तिः प्रमाणजन्यंतत्वज्ञानं कथंनिवर्तेत निवर्तकाभावादितिचेन्न॥ कारणनिवृत्तिर्हिकार्यनिवृत्तौ ज्ञापकत्वात्प्रयोजनाभावाच्च ॥ तस्यानिवृत्तिरुचितेति ॥ तदुक्तंवार्तिककारैः ॥ अविद्याघातिनः शब्दाद्याहंब्रह्मेतिधीर्भवेत् ॥ नश्यत्यविद्ययासार्द्धं हत्वा रोगमिवौषधम् ॥ भाष्यकारैरपि ॥ अज्ञानकलुषंजीवं ज्ञानाभ्यासाद्विनिर्मलम् । कृत्वाज्ञानंस्वयंनश्येत् जलंकतकरेणुवत् ॥ तथा सिद्धान्तलेशेप्युक्तम् ॥ ननु

सविलासाज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येन्नाशकान्तराभावादिति चेत् ॥ यथा कतकरजः सलिलेन संयुज्य पूर्वसंयुक्तरजोंतरविश्लेषमपि जनयति तथात्मन्यध्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्तयत्स्वात्मानमपिनिवर्तयतीतिकेचित् ॥ अन्येतु अन्यंनिवर्त्य स्वयमपिनिवृत्तौ दग्धलोहपीतांबुन्यायमुदाहरन्ति ॥ अपरेत्वत्र दग्धतृणकूटदहनोदाहरणमाहुः॥ केचित्तु वृत्तिरूपं ब्रह्मज्ञानं नाज्ञानतन्मूलप्रपञ्चनिवर्तकं अज्ञानस्य प्रकाशानिवर्त्यत्वानियमेन जडरूपवृत्तिनि-

T

र्वर्त्यत्वायोगात् ॥ किंतुतदारूढचैतन्य प्रकाशस्तन्निवर्तकः स्वरूपेण तस्या- ज्ञानादिसाक्षितया तदानिर्वतकत्वेपि अखण्डाकारवृत्त्युपारूढस्य तन्निवर्त- कत्वो पपत्तेः ॥ तृणादेर्भासिकाप्येषा सूर्य्यदीप्तिस्तृणंदहेत् ॥ सूर्य्यकांत- मुपारुह्य तंन्यायं तत्रयोजयेदित्यभि- युक्तोक्तेः ॥ एवञ्च यथा किञ्चित्काष्ठ- मुपारुह्य ग्रामनगरादिकं दहन् वह्नि- र्दहत्येव तदपिकाष्ठं तथा चरमवृत्तिमु- पारुह्य निखिलंप्रपंचमुन्मूलय न्नख- ण्डचैतन्यप्रकाशस्तन्निवर्तनापिप्रगल्भ त इति न तन्नाशे काचिदनुपपत्तिरि-

त्याहुः॥अन्येतु ब्रह्मज्ञानमज्ञानस्यैवनिवर्तकं ज्ञानाज्ञान योरेव साक्षाद्विरोधात् प्रपंचस्यतूपादाननाशान्नाशइति प्रपंचान्तर्गतस्यब्रह्मज्ञानस्यापि ततएव नाशो नच प्रपञ्चस्य ज्ञानानिर्वर्तत्वेमिथ्यात्त्वानुपपत्तिः ॥ प्रपञ्चनिवृत्तेः साक्षात् ज्ञानजन्यत्वाभावेपि ज्ञानजन्याज्ञाननाशजन्यत्वात्साक्षात्परंपरयावा ज्ञानैकनिवर्त्यत्वंमिथ्यात्वमित्यङ्गीकर्तव्यं ॥ एवञ्च तत्त्वसाक्षात्कारोदयेपि जीवन्मुक्तस्य देहादि प्रतिभास उपपद्यते प्रारब्धकर्मणां प्रतिबन्धेन तत्त्वसाक्षात्कारोदयेपि

प्रारब्धकर्मदेहादिप्रतिभासानुवृत्त्युपादानाविद्यालेशानुवृत्त्युपपत्तेः॥अज्ञानवत्प्रपञ्चस्यापिसाक्षात्ब्रह्मसाक्षात्कारनिर्वर्त्यत्वेनायमुपपद्यते विरोधिनि ब्रह्मसाक्षात्कारे सति प्रारब्धकर्मणःस्वयमवस्थानासम्भवेनाविद्यालेशनिवृत्तिप्रतिबन्धकत्वायोगादित्याहुरिति ननु ज्ञातआत्मेत्यत्रज्ञानस्यविशेषणत्वमुपलक्षणत्वंवा नाद्यः विशेषणनाशेसति विशिष्टस्यात्मनोपिनाशप्रसंगः ॥ नद्वितीयः ततः प्राक्कालेपि मोक्षव्यवहारापत्तिःस्यादितिचेन्न॥ उपलक्षणमेव प्राक्कालेपि मोक्षव्यव-

हारापत्तिरिति नैष दोषः॥ काकवन्तो-देवदत्तस्य गृहा इत्यादावपिकाकसम्ब-न्धात्प्रागपि देवदत्तस्य गृहत्वादिव्य-वहारापत्तेस्तुल्यत्वात्॥उपलक्षणस्या-पि स्वोत्तरकालएवव्यावर्तकत्वमिति चेदिहापितुल्यं नहि दृष्टेरनुपपन्नं नाम अविद्यायाश्चानादित्वात् ॥ प्रागभाव-रूप घटनिवृत्तावपि प्रागभावानुत्पत्ति-वन्नत्वज्ञाननिवृत्तावपि पुनरुत्पत्तिप्र-संगः॥ नन्वस्तूपलक्षणत्वं पुनस्तत्ज्ञानं सविकल्पकं निर्विकल्पकंवा ॥ यादृशं तस्यविषयंब्रह्म तादृशंतस्यज्ञानमिति-वदामः॥ ब्रह्मणश्च निर्विकल्पकाखण्डै-

करसत्वमुक्तम् ॥ ननु ब्रह्मणो विषयत्वेघटादिवदनित्यत्वं स्यादितिचेन्न चैतन्यविषयस्यैव घटादेर्जडत्वं कल्पितत्वंच नतुजडवृत्तिविषयस्यब्रह्मणः॥ अज्ञानध्वंसार्थंवृत्तेः कल्पितविषयता स्वीकारात्॥ तथाचोक्तंविवरणोपन्यासे ॥ नकर्मकारकंब्रह्म किंतुशास्त्रात्प्रगीयते ॥ चैतन्याविषयोब्रह्म वृत्तेस्तु विषयोभवेत् ॥ फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्॥ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥ कृत्यंज्ञेयं समाप्तंच ब्रह्मास्मीत्यवबोधने इति एवं भाष्यकारैरप्युक्तं समन्वयसूत्रभाष्ये॥

अलङ्कारोह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यताचेति॥तथाच श्रुतिः॥आत्मानंचेद्विजानीया दयमस्मीतिपूरुषः।किमिच्छन्कस्यकामाय शरीरमनुसंज्वरेदिति॥तस्मादहंब्रह्मास्मीत्येतदवसानाएवसर्वेविधयः सर्वाणिचेतराणिशास्त्राणिप्रमाणानि॥नह्यहेयानुपादेयाद्वितीयात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति॥ अपिचाहुः॥ गौणमिथ्यात्मनोसत्वे पुत्रदेहादिबाधनात्॥ सद्ब्रह्मात्माहममस्मीति बोधेकार्यंकथंभवेत्॥अन्वे-

ष्टव्यात्मविज्ञानात् प्राक्प्रमातृत्वमात्मनः ॥ अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययोयद्वत् प्रमाणत्वेनकल्पितः॥ लौकिकंतद्वदेवेदं प्रमाणंत्वात्मनिश्चयादिति॥अस्यार्थः। ननुप्रमातृत्वस्यकल्पितत्वे तदाश्रितानां प्रमाणानां कथं प्रामाण्यमित्यत आह देहेति॥ यथादेहात्मप्रत्ययः कल्पितोपि भ्रमेपि व्यवहाराङ्गतया मानत्वेनेष्यते तद्वत्प्रमात्रादिप्रामाण्यमित्यर्थः । तत्त्वसाक्षात्कारात्प्रागिति ॥ तथाकल्पतरुकाराअप्याहुः ॥ य उत्पद्यतेऽनुभवो नस पारमार्थिको यः पारमा

र्थिकोनसउत्पद्यतेऽतश्चप्रमात्रादेःकल्पितत्वात् कथं पारमार्थिकानुभवोत्पत्तिरितिचेन्न॥अज्ञाननिवृत्तौस्वयंप्रकाशते अलीकस्यापिवृत्तिं ज्ञानस्य सत्यविषयत्वादविद्या निवर्तकत्वोपपत्तिः॥दृष्टञ्च स्वप्नोपलब्ध व्याघ्रादीनां स्वाऽविद्यानिवर्त्तकत्वंमिति भावः इति॥ तथा अरुणेनैवबोधेन पूर्वं संतमसेहते॥ ततआविर्भवेदात्मा स्वयमेवांशुमानिवेति॥ वार्त्तिकेपि दुर्बलत्वादविद्यायाः स्वात्मत्वाद्बोधरूपिणः॥ शब्दशक्तेरचिंत्यत्वा द्विद्म स्तंमोहहानत इति॥ एवमात्मनो वृत्त्यादिनिरपेक्ष्यस्वयंप्र-

काशे श्रुतयोर्बृहदारण्यके ॥ यदेवसा-
क्षादपरोक्षाद्ब्रह्म यआत्मा सर्वांतरस्त-
न्मेऽव्याचक्ष्वेत्येषतआत्मासर्वांतरः क-
तमो याज्ञवल्क्यसर्वांतरोनदृष्टेर्द्रष्टारं
पश्येर्नश्रुतेः श्रोतारं शृणुयानमतेर्म-
न्तारंमन्वीथा नविज्ञातेर्विज्ञातारंवि-
जानीया एषतआत्मा सर्वांतरोऽतोऽ-
न्यदार्त्तम ॥ सहोवाचैतद्वै तदक्षरं गा-
र्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्व
ह्रस्वमदीर्घमलोहितमस्नेहमच्छा य-
मतमोऽवाय्वानाकाशमसङ्गमरसमग
न्धमचक्षुष्कमश्रोत्रमवागमनोऽतेज-
स्कमप्राणममुखममात्रमनन्तरमबाह्य-

म् ॥ अथातआदेशोनेतिनेति ॥ यद्वै-
तन्नपश्यति पश्यन्वैतन्नपश्यति न-
हिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशि-
त्वान्नतुतद्द्वितीयमस्ति ततोऽन्यद्वि-
भक्तंयत्पश्येत् ॥ यत्रवान्यदिव स्या-
त्तत्रान्योऽन्यंपश्येत् ॥ यत्रवाआत्मै-
वाभूत्सर्वंतत्रकेन कंपश्येत् ॥ विज्ञाता-
रमरे केन विजानीयात् ॥ येनेदꣳ
सर्वं विदितं तत्केन विजानीयात् ॥
एतावदरेखल्वमृतत्वमितिहोक्त्वा या-
ज्ञवल्क्योविजाहार इत्यादयः ॥ छा-
न्दोग्येपि यत्रनान्यत्पश्यति नान्य-
च्छृणोति नान्यद्विजानाति सभूमाऽथ

यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं योवैभूमा तदमृतमथयदल्पंतन्मर्त्यं ॐ स भगव कस्मिन् प्रतिष्ठितइति स्वे महिम्नि यदिवा नमहिम्निइत्यादयः ॥ तथा कल्पलतिकायां ॥ ब्रह्मविषयता निष्प्रकारकज्ञानस्य सापिकल्पितविषयता ॥ अतएव चाद्यक्षणे वृत्तितद्वतोसाक्षिभाष्यत्वेपि वृत्तेर्निर्विकल्पकत्वविरोधः ॥ तस्याः पदार्थशोधकतर्कसंस्कृतशब्दजन्याया अद्वितीयचैतन्यमात्राकारत्वात् ॥ इयमेवप्रमाणफलावस्थोच्यते ॥ द्वितीयक्षणेतु चिन्मात्राकारग्रहणलब्धबलया

वृत्त्या चिन्मात्रागोचराज्ञानंनिवर्तते ॥ ततोऽहंकारजीवब्रह्माविभागाद्यध्यास-निवृत्तिः ॥ उपादाननाशस्यैवाऽव्यव-धानेनोपादेयनाशप्रयोजकत्वात् ॥ त-तस्तेनसहैव वा तदनंतरं वा तदुपादेय-चैतन्याभिव्यञ्जकवृत्तिनिवृत्तिः ॥ एव-मिन्द्रियदेहाध्यासानामपि निवृत्तिः ॥ एवं तदुपरि कस्याप्यवच्छेदकस्याभा वादनुपाहितचैतन्यं जीवब्रह्मजगद्विभा-गशून्यं कवलीकृताज्ञानतत्कार्यं स्व-प्रकाशपरमानंदरूपतया सर्वदा वभा-समानमेवातिष्ठति सैव मोक्षावस्थे त्यु-च्यते।अज्ञानस्यचानादित्वेनाजन्यत्वात्

पुनरनाद्यज्ञानान्तरस्य चानंगीकारादेकस्याप्येवाज्ञानव्यक्तेः सर्वोपादानभूताया आत्यन्तिकनिवृत्त्या न संसारस्य पुनरावृत्तिः ॥ एतेन तज्ज्ञानं स्वनिवर्त्यं नवेति विकल्पोपि निरस्तः॥ तस्यस्वकारणनाशनिवर्त्यत्वात् ॥ उपादानकारणनाशस्य कार्यनाशकत्वे सर्वेषामविवादात् ॥ दृश्यत्वेन रूपेणाविद्ययासहस्वनिवर्त्यत्वेपि नदोषः निवर्त्यतानिवर्तकतयोरवच्छेदकैक्यक्षणभंगोभवेत् ॥ अत्रचोक्तप्रमाविशेषत्वेन निवर्तकतादृश्यत्वेन निवर्त्यतेतिनोक्तदोषः ॥ ननु तर्हिस्वप्राद्यध्या-

सादिकारणीभूताज्ञानस्य जागरादिप्रमाणज्ञानेनानिवृत्तौ पुनःस्वप्नाद्यध्यासोनस्यात्॥ उक्तयुक्तेस्तुल्यत्वात्तत्रानेकाज्ञानस्वीकारे आत्मन्यपितथासम्भवेन मुक्तावनाश्वासप्रसंगात् ॥ नन्वनयैवानुपपत्त्या तत्राज्ञाननिवृत्तिर्नांगीक्रियते ॥ एकस्यामेवरज्ज्वामज्ञातायां सर्पभ्रमेण धाराभ्रमतिरोधानवज्जागरादिभ्रमेणापि स्वप्नादिभ्रमतिरोधानमात्रं क्रियते ॥ अज्ञाननिवृत्तिस्तु ब्रह्मात्मैक्यविज्ञानादेवेति नमुक्तावनाश्वासप्रसंगः ॥प्रतिवाद्याह मैवं ब्रह्मात्मैक्यज्ञानादपि अज्ञाननिवृत्ति-

T

सम्भावना नस्यात्कुत्रापि ज्ञानादज्ञाननिवृत्तेरदर्शनात् ॥ अत्रब्रूमः नउभयथाप्युपपत्तिः ॥ तथाहिजागरादिज्ञानादपि स्वप्नाद्यध्यासादिनिवृत्त्यभ्युपगमपक्षे मूलाज्ञानस्यैव विचित्रानेकशक्तिमतो मूलाज्ञानस्यैवानिवृत्तौ कारणान्तरासम्भवात् तादृशस्यचद्वितीयस्यानंगीकाराान्नब्रह्माध्यासानां पुनरुत्पत्तिः सम्भवतीत्यपुनरावृत्तिसिद्धिः॥ रज्ज्वज्ञाना दिनाज्ञानानिवृत्त्यनङ्गीकारेपि नदोषः ॥ चिन्मात्रस्यैवाज्ञानाश्रयत्वाविषयत्वसम्भवात् ॥ जडे प्रमाणप्रयोजनाभावेन तदनङ्गीकारात् ॥ न-

T

चाज्ञानस्यचिन्मात्राश्रयत्वे कथमन्तः करणवृत्तिरूपेणज्ञानेन तन्निवृत्तिः भिन्नाश्रयत्वात्॥ ज्ञानस्यचजन्यत्वेनाचिन्मात्राश्रयत्वानुपपत्तेः तस्यकूटस्थस्वभावत्वात्॥ अज्ञानस्यचानादित्वेन कौटस्थ्यव्याघातकत्वायोगादित्युक्तमितिवाच्यम् ॥ चैतन्यान्तःकरणयोस्तादात्म्याध्यासेनान्तः करणधर्मस्यापि चैतन्यधर्मत्वानपायात् ॥ तदुक्तं पञ्चपादिकाकृद्भिः ॥ आनन्दोविषयानुभवोनित्यत्वंचेतिसन्तिधर्मा ब्रह्मणोऽपृथक्त्वेपिपृथगिवावभासंतइति ॥तार्किकैरपि कर्णशष्कुल्यावच्छिन्ना-

T

कारोन स्वसम्बन्धेन महाकाशाश्रि-
तशब्दग्रहणमङ्गीक्रियते ॥ उपहितेपि
स्वरूपैक्यानपायादितिज्ञानाज्ञानयोः
समानाश्रयत्वविषय त्वोपपत्तिः॥ नच
ज्ञानस्य क्वाप्यविद्यानिवर्तकत्वादर्श-
नात् ब्रह्मज्ञानेतत्कल्पनं नस्यादिति-
वाच्यम् ॥ नह्यज्ञानंज्ञानांनिवर्त्यं अना-
दिभावत्वात् ब्रह्मवत् ॥ इत्याद्यनुमा-
नाद्ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वं वयं-
साधयामः येनव्याप्तिग्रहार्थं उदाहर-
णापेक्षाभवेत्॥ किंतु श्रुत्या श्रुतार्था-
पत्त्यावेतिब्रूमः ॥ तत्रश्रुतिस्तावत्
तमेव विदित्वातिमृत्युमेति नान्यः प-

न्था विद्यतेयनायेति ॥ मृत्युरविद्येति शास्त्रप्रसिद्धम् ॥ तथा तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ स्मृतिश्च ज्ञानेनतुतदज्ञानं येषां नाशितमात्मनः ॥ तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमित्यादयः॥ यदिहि कस्यचिदपितत्त्वाववोधे जाते नाज्ञानंनिवर्तेत ततोऽव्यभिचारात्कारणता नस्यान्नतु तथा क्वापिदर्शनमस्ति ॥ एकस्यैवतत्त्वज्ञानेनाज्ञाननिवृत्त्यभ्युपगमात् जीवान्तरप्रातिभासस्य चस्वाप्निकजीवान्तरप्रतिभासवत् विभ्रममात्रत्त्वात्॥ साक्षात्कृतेत्वधिष्ठाने समनन्तरनिश्चि-

तिः ॥ अध्यस्यमानंनास्तीति बाधइ-
त्युच्यतेबुधैरिति ॥ १ ॥ तत्राऽविद्या-
सहकार्येणनासीदस्तिभविष्यतीतिसि-
द्धम् ॥ नन्विदं विरुद्धमुक्तमविद्यास-
हकार्येणनासीदिति ॥ अविद्याकार्यस्य
विद्वत्तरशरीरस्य प्रत्यक्षाऽनुभूयमान-
त्वादविद्याभावे तत्कार्यस्य कथं स्थि-
तिरिति चेन्न ॥ आवृत्तितादात्म्ये
केवलाज्ञानकृते ॥ अतएवज्ञानोत्पत्त्या
नश्यतः॥तयोर्निरुपाधिकभ्रमत्वात्॥र-
ज्ज्वादौसर्पादिभ्रांतिर्निरुपाधिकोभ्रमः
अतएवज्ञानेन निरुपाधिकभ्रमे निवृ-
त्तेपि ज्ञानिनः प्रारब्धभोगोनविरुध्यते

तस्य सोपाधिकभ्रमत्वात् ॥ तत्राऽऽरब्धकर्मसहिताविक्षेपशक्तिमदज्ञानलेशउपाधिः ॥ तथाचज्ञानेन स्वावस्थानप्रयोजकीभूतावरणशक्तिमदज्ञाननिवृत्त्या अनारब्धकर्मनिवृत्त्याच पश्चात् भोगेनारब्धकर्मणां क्षये यथातैलवर्तिनाशे दीपः स्वतएवनश्यति तथाविक्षेपशक्तिमदज्ञानलेशस्स्वयमेव नश्यतीति नतत्रयोगोवा ज्ञानंवाऽपेक्षते ॥ प्रमाणाऽभावात् ॥ तदुक्तं भाष्यकारैः॥ उपदेशसाहस्रिकायाम् ॥ अविद्यावृत्तितादात्म्ये विद्ययैवविनश्यतः ॥ विक्षेपस्यस्वरूपन्तु प्रारब्धक्षयमीक्षते १

आरब्धस्यफलेह्येते भोगोज्ञानंचकर्मणः॥ अविरोधस्तयोर्युक्तो वैधर्म्यंचेतरस्यचेति ॥२॥ ततश्चाविद्वत्शरीरस्य सोपाधिकतया निरुपाधिकब्रह्मात्मैक्यसाक्षात्काराऽविरोधित्वेन ज्ञानेनाऽज्ञानेनिवृत्तेऽपि प्रारब्धापादितविषयमनुभवन् विद्वान् ब्रह्मात्मनावतिष्ठतइत्यविरोधः॥बाधितानुवृत्त्या प्रतीतस्याऽलीकस्य प्रपंचस्य मूढैर्वास्तवत्वारोपेऽपि विदुषोऽकिञ्चित्करत्वमुक्तं भाष्यकारैः ॥ तथाच आरोपितंनाश्रयदूषकंभवेत्कदापिमूढैरतिदोषदूषितैः ॥ नार्द्रीकरोत्यूषरभूमिभागं मरीचिका-

वारियथाप्रवाहइति॥ तस्मात्सर्वथापि ज्ञानिनः कृतकृत्यत्वात् ॥ ध्यानाद्यभावेपि दृष्टदुःखमात्रं नमोक्षेप्रतिबन्धइत्यलम्॥इदंचाग्रे विस्तरेणवक्ष्यामः अस्तिचात्राविदुषामनुभवः ॥ वार्तिके॥ तत्त्वमस्यादिवाक्योत्थ सम्यग्धीजन्ममात्रतः ॥ अविद्यासहकार्येण नासीदस्तिभविष्यतीति॥ सर्वज्ञमुनिरप्याह॥ पश्यामिचित्रमिवसर्वमिदंद्वितीयं तिष्ठामिनिष्कलचिदेकवपुष्यनन्ते॥ आत्मानमद्वयमनन्तसुखैकरूपं पश्यामिदग्धरशनामिवचप्रपञ्चम् ॥ १ ॥ अद्वैतमप्यनुभवामिकरस्थविल्व तु-

ल्यंशरीरमहिनिर्ल्वयनीवदीक्षे ॥ एवं चजीवनामिवप्रतिभासनंच निःश्रेयसाधिगमनंचममप्रसिद्धमिति॥ २ ॥ पदवाक्यप्रमाणज्ञै र्दीपभूतैःप्रकाशितम् ॥ ब्रह्मवेदरहस्यं यैस्तान्नित्यं प्रणतोऽस्म्यहम् ॥ १ ॥

ओं इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमानन्द पादपूज्यशिष्य श्रीविमलानन्दतीर्थसंगृहीते वेदान्तसिद्धान्तसारसंग्रहे अपवादोनाम द्वितीयं प्रकरणम् ॥ ओंतत्सत् ॥

T

ओं नमः श्रीगणेशाय ।

# अथ फलरूपमुक्तिविवेकप्रकरणं प्रारभ्यते ॥



साच मुक्तिर्द्विधा जीवन्मुक्तिर्विदेह-मुक्तिश्च तत्र तत्त्वज्ञानिनोभोगेन प्रारब्धकर्मक्षये वर्तमानशरीरपातो विदेह-मुक्तिः ॥ तथा च श्रुतिः ॥ तस्यतावदेव-चिरंयावन्नविमोक्ष्येऽथसंपत्स्येइत्यादि॥ तथा शारीरकसूत्रम ॥ भोगेनत्वितरे-क्षपयित्वा सम्पद्यतइति ॥ अस्यार्थः प्रारब्धरूपयोः पुण्यपापयोः कदाना-

शङ्कत्यपेक्षायामाह भोगेनेति भोगेन सुखदुःखानुभवेन ॥ इतरे वर्तमानशरीरजनके प्रारब्धपुण्यपापे क्षपयित्वा नाशयित्वा सम्पद्यते कैवल्यं प्राप्नोतीत्यर्थः ॥ अ० ४ पा० १॥ ५॥ श्रुतिश्च मुक्तिकोपनिषदि जीवन्मुक्तिपदंत्यक्त्वा स्वदेहेकाल सात्कृते॥विशत्यदेहकैवल्यं पवनस्पंदतामिवेति पुराचीनाः ॥ नव्यास्त्वेवमाहुः ॥ भाविशरीरानारम्भोविदेहमुक्तिः ॥ साचज्ञानोत्पत्तिसमकालैव॥ ज्ञानेनाज्ञाननिवृत्तेः संचितकर्मणां नाशादागामिकर्मणामश्लेषात्॥ भोगेन प्रारब्धकर्मक्षयात्-

शरीरारम्भकस्यासम्भवात् ॥ भाविशरीरानारम्भस्य ज्ञानसमकालत्वं युज्यते॥तदुक्तम्॥तीर्थेश्वपचगृहेवा नष्टस्मृतिरपिपरित्यजन्देहम्॥ज्ञान- समकालमुक्तः कैवल्यंयातिहतशोकइति॥ ज्ञानामृतेनतृप्तस्य कृतकृत्यस्ययोगिनः नैवास्तिकिञ्चित्कर्तव्य मस्तिचेन्नसतत्त्वविदित्यादि ॥ अयमेव सद्योमुक्तिपक्षः ॥ तदुक्तं संक्षेपशारीरके ॥ अ० ४ ॥ सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानतत्सम्भवं सद्योवस्तुवलप्रवर्तनमरुत्व्यापारसंदीपितः ॥ निर्लेपेनहिदन्दहीतिनमनागप्यस्यरूपान्तरं संसा-

रस्यशिनष्टितेनविदुषः सद्योविमुक्ति-
र्ध्रुवा ॥ ३५ ॥ अस्यार्थः ननु नतत्त्व-
ज्ञानमात्राद्बन्धनिवृत्तिः सम्भवति त-
त्त्वविदामपिशरीरादिबन्धदर्शनादि-
त्याशङ्क्य तथाविद्वान्नामरूपाद्विमुक्तः।
एवमेवास्यपरिद्रष्टुरिमाः षोडशकलाः
पुरुषायणाःपुरुषंप्राप्यास्तंगच्छन्तीन्ति
त्यादि शास्त्रप्रामाण्याल्लोके विद्याया-
आविद्यानिवृत्तौ निरपेक्षसाधनत्वाच्च
तत्त्वसाक्षात्कारवतः सद्यएवविदेहकै-
वल्यं भवति ॥ यस्तु देहादिबन्धोदृ-
श्यते सनतत्त्वसाक्षात्कारवानितिनि-
श्चीयते इत्याशयेनसद्योमुक्तिमतं दर्श-

यति ॥ सम्यग्ज्ञानेति॥ सद्योदंदहतीति-सम्बन्धः ॥ वस्तुविषयभूतं परमार्थस-द्ब्रह्म तदेववृत्तिज्ञानस्याविद्यादिदाहक-त्वेप्रयोजकत्वात्प्रवर्तनमरुत्तद्व्यापारो-वृत्तौ प्रतिफलनम्॥तेनसन्दीपितः प्र-ज्वलितइत्यर्थः ॥ शिनष्टिशेषयति ॥ ॥ ३८ ॥ जीवन्मुक्तिप्रत्ययंशास्त्रजातं जीवन्मुक्तेः कल्पितेयोजनीयम् ॥ तावन्मात्रेणार्थवत्त्वोपपत्तेः सद्योमुक्तिः सम्यगेतस्यहेतोः ॥ ३९ ॥ ननु तत्त्व-विदः सद्यो विदेहकैवल्योपगमे तस्य तावदेवचिरंयावन्नविमोक्ष्येऽथ सम्प-त्स्ये प्रजहातियदाकामान् सर्वान्पा-

T

र्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टः स्थितप्रज्ञस्तदोच्यते इत्यादिजीवन्मुक्तिप्रतिपादकशास्त्रं निर्विषयं स्यादित्याशङ्क्य तस्यार्थवादतया शुकवामदेवादिमुक्तिशास्त्रवत् प्रकृष्टप्रज्ञाकल्पित जीवन्मुक्त्यनुवादेन ब्रह्मविद्यास्तुतिपरत्वान्नतद्विरोध इत्याभिप्रेत्याह जीवन्मुक्तीति ॥ जीवन्मुक्तेः प्रत्ययोयेन तत्तथोक्तम् ॥ अर्थवत्त्वोपपत्तेः स्तुतिरूपप्रयोजनवत्त्वोपपत्तेः ॥ एतस्य हेतोरेतस्माद्धेतोः जीवन्मुक्ति शास्त्रस्या न्यविषयत्वाद्धेतोरितियावत ॥ यद्वाविद्वद्गोचरंयोजनीयं तस्याविद्या

लेशवत्त्वोपपत्तेः ॥ तस्याभीष्टानिर्नि-मित्तानिवृत्ति र्यद्वाविद्यासंततिर्हैतुले-शम् ॥ ४० ॥ जीवन्मुक्तिशास्त्रस्यार्थ-वादत्वेपि तदर्थस्यप्रमानान्तराविरुद्ध-त्वेन भूतार्थवादत्वोपपत्तेस्तत्सिद्धाजी-वन्मुक्तिर्नशक्याऽपलपितुम्॥नचविद्या-सामर्थ्यान्निश्शेषाविद्या निवृत्तौ तदनु-पपत्तिरितिवाच्यम् ॥ अनार[1]ब्धकार्ये एवतु पूर्वेतदवधेरिति सूत्रोक्तन्यायेन विद्याया आरब्धफलकपुण्य पापानिव-र्तकत्वायोगेन तत्स्थितिनिमित्ततया कल्पिताविद्यालेशवशेन विदुषोपि

१ न आरब्धं सुखदुःखरूपं फलं कार्यं येषांतंअनारब्धकार्ये । आगामिसंचितकर्मणि तेएवज्ञानेननश्येते । आरब्धकर्मणांभोगे नसावधिकत्वान्नज्ञानान्निवृत्तीत्यर्थः ।

यावत्प्रारब्धकर्मक्षयं शरीरादिधारणोपपत्तेरिति मतान्तरमाह॥यद्वेति॥ योजनीयं जीवन्मुक्तिशास्त्रमितिशेषः॥ तर्हि विद्याया अविद्यालेशनिवर्तकत्वाभावात् सननिवर्तेतेत्याशङ्क्य प्रारब्धकर्मणां भोगादेवक्षये सति प्रयोजनाभावात् सस्वयमेवानिवर्ततइत्याह तस्येति ॥ अविद्यालेशनिवृत्तेरपि निवर्त्यातिरिक्तं निमित्तं वाच्यम्॥ अन्यथा तस्य लेशस्य क्षणिकत्वापत्तेरित्याशङ्क्याह यद्वेति ॥ अध्यस्तान्तः करणवृत्तिसाक्षात्काराभिव्यक्तस्वरूपचैतन्यमेवानुवर्तमानं विद्यास-

ततिः सैव प्रतिबन्धकर्मणांभोगेन क्षये जीवन्मुक्तिहेतुभूता विद्यालेशं निवर्त्तयतीत्यर्थः॥४०॥ जीवन्मुक्तिव्यापृतेःप्रापकोय स्तस्याविद्यालेशगन्धादिभाषाः नाविद्यायानापि भागस्यतस्यास्तस्मिन्पक्षे दुर्घटत्वाद्विमुक्तेः ॥ गन्धच्छायालेशसंस्कारभाषा विज्ञातव्याभाष्यकारीयतन्त्रे ॥ स्वाविद्यायावाधितायाः प्रतीतिः पौर्वापर्येणार्थमालोच्यबुद्ध्या॥४२॥ अथ व्यवहारदृष्ट्या प्रकृष्टप्रज्ञाकल्पितत्वाच्च जीवन्मुक्ति-

१ तस्यांविक्षेपशक्तिमदविद्यालेशस्य भाषाःनामानीत्यर्थः।

१ भागस्यतस्य। आवरणशक्तिमदज्ञानस्यावरणस्य च॥ आवरणशक्तिमदज्ञानेः सतिमुक्तिरापदुर्घटेत्यर्थः॥

पक्षमप्याह ॥ जीवन्मुक्तिस्तावदस्ति-
प्रतीते द्वैतच्छायातत्रचास्तिप्रतीतेः ॥
द्वैतच्छायारक्षणायास्तिलेश स्तस्मि-
न्नर्थेस्वानुभूतिः प्रमाणम् ॥ ४३ ॥ ननु
स्वानुभूत्यनुसारेण जीवन्मुक्तिस्तावद-
स्तीत्युक्तम् ॥ तस्याः किंलक्षणम् ॥
तत्र किं प्रमाणम् । कानि च साधनानि ॥
प्रयोजनंच किमितिचेदुच्यते ॥ कर्तृ-
त्वभोक्तृत्वाद्यखिलबन्धप्रतिभासनि-
वृत्तिपूर्वकंस्थिरप्रज्ञत्वं जीवन्मुक्तेर्लक्ष-
णम् ॥ तथाचोक्तं भाष्यकारैः ॥ नि-
र्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति-
कथ्यते ॥ सुस्थितासौभवेद्यस्य स्थित-

प्रज्ञस्सउच्यते ॥ यस्यस्थिताभवेत्
प्रज्ञा यस्यानन्दोनिरन्तरः ॥ प्रपञ्चो-
विस्मृतप्रायः सजीवन्मुक्तइष्यते॥४२९
श्रुतिश्च कठवल्ल्यां विमुक्तश्चविमुच्यते
अस्यार्थः॥यद्यपिज्ञानात्पूर्वमपिरागादि-
भिर्मुक्तः शान्तोदान्तइत्यादिश्रुत्याश-
मदमाद्युपेतस्य श्रवणाद्यधिकारावग-
मात् तथापि ज्ञानात्पूर्वं रागद्वेषादिभि-
र्मुक्तिर्यत्नसाध्या ज्ञानोत्तरंतुयोगाभ्या-
सेन वासनाक्षयमनोनाशयोर्दृढतर-
सम्पन्नत्वेनाभासरूपस्य रागादेरप्य-
सम्भवेन रागद्वेषादिमुक्तिः स्वतः सि-
द्धाभवतीत्यतोविमुक्तः ॥ यद्यपि प्रल-

यस्सुषुप्त्यादौरागादिभिस्सामान्यतया मुक्तोपि जीवन्मुक्तौ विशेषेणरागद्वेषादिनिवृत्तिवानित्यर्थः ॥ बृहदारण्यकेपि ॥ तद्यथाहिनिर्ल्वयनी वल्मीके मृताप्रत्यस्ताशयीतएवमेवेदं शरीरं शेते॥ अथायमशरीरोऽमृतः प्राणे ब्रह्मैवतेजएवेत्यादि अस्यार्थः॥अहिःसर्पःतन्निर्ल्वयनीकञ्चुकः यथावल्मीकेसर्पागारेप्रत्यस्ताप्रक्षिप्ताशयीत नाम वर्तेत एवमेवेदं शरीरं सर्पस्थानीयेन जीवन्मुक्तेनाऽनात्मभावतयापरित्यक्तं मृतमिवशेते॥ अथायं मुक्तोऽशरीरोऽथएवचाऽमृतः प्राणःप्राणितीतिप्राणःसर्वस्यचेष्टादाता

ऽधिष्ठानरूपः ॥ तेजः विज्ञानं ज्योतिरि
त्यर्थः॥ अ० । ९॥ स्मृतिश्च॥प्रजहाति
यदाकामान् सर्वान् पार्थमनोगतान्॥
आत्मन्येवात्मनातुष्टःस्थितप्रज्ञस्तदो-
च्यते॥ ५५ ॥ दुःखेष्वनुद्विग्नमनाः सु-
खेषुविगतस्पृहः ॥ वीतरागभयक्रोधः
स्थितधीर्मुनिरुच्यते इत्यादि ॥ ५६ ॥
सुषुप्तवज्जाग्रतियोनपश्यति द्वयन्तु-
पश्यन्नपिचाद्वयत्वतः ॥ तथाचकुर्वन्न-
पिनिष्क्रियश्चयः सआत्मविन्नान्यइ-
तिहनिश्चयइत्याभियुक्तैरुक्तम् ॥ एवंब-
हुधाश्रुतिस्मृतीतिहासपुराणादिषूक्तम्
यान्येवजीवन्मुक्तस्य लक्षणानि तान्ये-

T

वजीवन्मुक्तौप्रमाणानीत्यपिध्येयम् ॥ अथ साधनानि॥ ननु जातेपितत्त्वज्ञाने बलवत्प्रारब्धस्य निवृत्तिर्नदृश्यते ॥ कुतोऽग्न्युष्णवद्वास्तवकर्तृत्वाद्यन्तःकरणधर्माणामात्यंतिकनिवृत्तिरितिचेन्न ॥ प्रारब्धापेक्षया पुरुषार्थरूपस्य योगाभ्यासस्य प्रबलत्वात् ॥ जीवन्मुक्तिभोगप्रदकर्मणामात्यन्तिकनिवृत्त्यभावेपि योगाभ्यासेन तदाभिभवोभवत्यवेत्यतो नोक्तदोषः ॥ अन्यथा चिकित्साशास्त्रमारभ्य मोक्षशास्त्रपर्यन्तस्य सर्वस्यानारम्भप्रसंगःस्यात्॥ प्रारब्धापेक्षया पुरुषप्रयत्नरूपस्या-

भ्यासस्य प्रवलत्वेन मोक्षशास्त्रस्यच-
रितार्थत्वं स्यात्॥ योगशब्देनात्रस-
माधिर्गृह्यते॥ तच्चसमाधीयते चि-
त्तमस्यामितिसमाधिर्ब्रह्म तस्याभ्यासः
येनकेनाप्युपायेनतत्प्रवणाचित्तः तथा-
चोक्तं गौडपादैः॥ सर्वाभिलाषाविगतः
सर्वचिन्तासमुत्थितः॥ सुप्रशान्तः
सकृज्ज्योतिः समाधिरचलोऽभयः॥
३७॥ ग्रहोनतत्रनोत्सर्गश्चिन्तायत्रन-
विद्यते॥ आत्मसंस्थंतदाज्ञान मजा-
तिसमतांगतम्॥ ३८॥ आत्मसत्या-
नुबोधेन नसंकल्पयतेयदा॥ अमन-
स्तांतदायाति ग्राह्याभावेतदग्रहम् ३२

अस्मिन

T

अस्पर्श योगोवैनाम दुर्दर्शः सर्वयोगि-
भिः । योगिनोबिभ्यतिह्यस्मादभये-
भयदर्शिनः ॥ ३९ ॥ उपायेनानिगृह्णी-
या द्विक्षिप्तंकामभोगयोः ॥ सुप्रसन्न
लयेचैव यथाकामोलयस्तथा ॥ ४२ ॥
दुःखंसर्वमनुस्मृत्य कामभोगान्निवर्त-
येत् ॥ अजंसर्वमनुस्मृत्य जातंनैवतु-
पश्यति ॥ ४३ ॥ लयेसम्बोधयेच्चित्तं
विक्षिप्तंशमयेत्पुनः ॥ सकषायंविजा-
नीया त्समप्राप्तंनचालयेत् ॥ नास्वा-
दयेत्सुखंतत्र निस्सङ्गः प्रज्ञयाभवेत् ॥
निश्चलंनिश्चरच्चित्त मेकीकुर्यात्प्रयत्न-
तः ॥ ४५ ॥ यदानलीयतेचित्तं नच-

विक्षिप्यते पुनः ॥ अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥ इत्यादिना सोपायं ब्रह्मण्येव चित्तसमाधानमुक्तम्। तथा भाष्यकारैरप्युक्तं वाक्यसुधायाम् उपेक्ष्य नामरूपे द्वे सच्चिदानन्दवस्तुनि। समाधिं सर्वदा कुर्याद् धृदये वाऽथवा बहिः॥२२॥ अस्यार्थः। वक्ष्यमाणप्रकारेण वाच्यांशभूते नामरूपे द्वेऽप्युपेक्ष्याऽवस्तुतया बाधित्वा सच्चिदानन्दवस्तुनि लक्ष्येऽखंडार्थे एकरसे सर्वदा समाधिं कुर्यात्॥ समाधिः सच्चिदानन्दं ब्रह्म तावन्मात्रेण चित्तस्य स्थिरीभावः तं कुर्यादित्यर्थः ॥ सर्वत्र व्यापकस्य ब्रह्मणः कुत्र

T

समाधानं कुर्यादित्यपेक्षायां कर्तुर्बुद्धि-
सामर्थ्यतारतम्येन स्थानभेदानाह ॥
हृदयेत्यादिना ॥ तत्राऽन्तर्बहिश्च ब्र-
ह्मणिकर्तव्यसमाधिंद्वेधाविभज्यव्यु -
त्पादयति सप्तभिःश्लोकैः॥ तत्र चतुर्भि-
र्हृदयालम्बनसमाधिभेदानाह ॥ सवि-
कल्पोऽविकल्पश्च समाधिर्द्विविधोहृ-
दि ॥ दृश्यशब्दानुभेदेन सविकल्पः
पुनर्द्विधा ॥ २३॥ तत्राद्यंव्युत्पादयति॥
कामाद्याश्चित्तगादृश्यास्तत्साक्षित्वेन चे
तनाम् । ध्यायेद्दृश्यानुविद्धोयंसमाधि
स्सविकल्पकः२४कामाद्याश्चित्तस्यैववृ-
त्तयः दृश्यत्वेनचित्तवदाविर्भावतिरो-

भावधर्मकत्वात् ॥ चित्तावस्थायामेव विभाव्यमानत्वात्सुषुप्तावभावाच्चि त्तवत्सदादृश्यत्वाद्वा चित्तधर्मा नात्मधर्मा यतोऽतस्तत्साक्षित्वेन विभज्यावभासमानां चेतनां स्वप्रकाशचिदात्मभूतां ध्यायेत् ॥ तदालोच्य तदेकमनावस्थानं ध्यानं तत्कुर्यात् ॥ यदेवंविधं ध्यानमयं दृश्यानुविद्धो नामसविकल्पकः समाधिरुच्यतइतियोजना ॥ ४२ ॥ एवं स्थूलसविकल्पकसमाधिमभिधाय सूक्ष्मं सविकल्पकं द्वितीयं समाधिमाह ॥ असंगः सच्चिदानंदः स्वप्रभोद्वैतवर्जितः ॥ अस्मी-

तिशब्दविद्धोयं सविकल्पः समाहितः ॥ २५ ॥ एवं यत्नतः क्रमेण समाधिद्वयसम्पत्तौ स्वयमेवभवंतं निर्विकल्पसमाधिमुपदिशति॥ स्वानुभूतिरसावेशाद्दृश्यशब्दानुपेक्ष्यतु ॥ निर्विकल्पः समाधिःस्यान्निर्वातस्थलदीपवत्॥२६। स्वस्यानुभूतिः स्वानुभूतिः सच्चिदानन्दब्रह्म तदेव रसः ॥ रसोवैरसः रसंवैलब्ध्वानन्दीभवतीतिश्रुतेः॥तस्यावेशः यदास्वप्नजागृतयोर्मध्ये ब्रह्ममात्रास्फुरणं तदातस्मात्स्वानुभूतिरसावेशात्॥ बाह्यान्तरालंबनभूतान् दृश्यशब्दानुपेक्ष्याऽनादृत्यानिवातस्थलदीपवद -

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खण्डरूपतया चित्तस्यावस्थानं निर्वि-
कल्पकसमाधिःस्यादितियोजना २६
इदानीमिदमेवसमाधित्रयंवाह्यावल-
म्बनं व्युत्पादयति ॥ हृदिच वाह्यदे-
शेऽपि यस्मिन्कस्मिंश्चवस्तुनि॥ समा-
धिराद्यःसन्मात्रेनामरूपे पृथक्स्थितः
द्वितीयंशब्दानुविद्धं सविकल्पसमाधि-
माह अखण्डैकरसंवस्तुसच्चिदानन्द
लक्षणम्॥इत्यवच्छिन्नचिन्तेयंसमाधि-
र्मध्यमोभवेत् ॥२८॥ अत्र वाह्यालम्ब-
नेऽपि निर्विकल्पसमाधिमाह॥स्तब्ध-
भावोरसास्वादात्तृतीयः पूर्ववन्मतः ॥
एतैःसमाधिभिः षड्भिर्नयेत्कालं नि-

T

रंतरम् ॥ २८ ॥ रसास्वादात्पूर्वोक्तबाह्यालम्बनेपि ब्रह्मभावनयास्तव्यभावउन्मन्यवस्था पूर्ववन्निर्वातस्थलदीपवद्बाह्यालम्बनेपि निर्विकल्पसमाधिरितियोजना॥एवमेतैः षड्भिर्बाह्यालम्बनैर्हृदयाधारैश्च चित्तसमाधिभिर्निरंतरं कालं न येत् ॥ एतेषामन्यतमेन समाधिनाविना क्षणमात्रमपि न तिष्ठेदित्यर्थः ॥२९॥ उक्तं च ॥ क्षणमात्रं नतिष्ठेद्वृत्तिं ब्रह्ममयीं विना ॥ यथा तिष्ठन्तिब्रह्माद्याः सनकाद्याः शुकादयः॥ उक्तायास्समाधिकर्तव्यताया अवधिं व्युत्पादयति ॥ देहाभिमानेगलिते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञातेपरमात्मनि॥ यत्रयत्रमनोयाति तत्रतत्रसमाधयः ॥ देहवासना लोकवासना शास्त्रवासनाश्चेति वासनात्रयनिवृत्तिपूर्वकदेहाभिमानेगलिते संशयविपर्ययादिप्रतिबन्धरहितेन परमात्मनि विज्ञाते सति यत्र यत्र दृश्ये कार्यें मनो याति तत्र तत्र सर्वत्र दृश्ये घटादौ मृत्तिकेव ब्रह्मदर्शनरूपाः समाधयः सन्तीतियोजना ॥ १ ॥ अस्यसमाधेर्बहिरंगसाधनान्यप्यत्रैव ज्ञातव्यानि ॥ तथाहि ॥ अजिह्वःषण्ढकः पंगु रंधोवधिरएवच ॥ मुग्धश्चमुच्यते योगी षड्भिरेतैर्नसंशयः॥नकुर्यान्नवदे-

त्किंचिन्नध्यायेत्साध्वसाधु वा ॥ आत्मारामोऽनयावृत्त्या विचरेज्जडवन्मुनिः ॥ १ ॥ अमृतनादविंदूपनिषदि ॥ अन्धवत्पश्यरूपाणि शब्दंबाधिरवच्छृणु ॥ काष्ठवत्पश्यवैदेहं प्रशान्तस्येति लक्षणमित्यादीनि ॥ प्रणवशब्दोप्यस्यसमाधेरुत्कृष्टालम्बनत्वेन सर्वासूपनिषत्सुप्रतिपादितः ॥ तदर्थस्तद्व्याख्यानंचषोडशमात्रात्मकरूपतया नृसिंहतापिन्यामुक्तं तत्क्रमआत्मपुराणे तदर्थप्रतिपादनेदर्शितः ॥ तथाहि ॥ प्रणवस्यचतस्रःस्युर्मात्राएतास्सुशोभनाः ॥ अकारोपितथोकारो मकारोना-

दनामकः ॥१॥ एकैकापिचतुर्धास्यात् स्थूलादिपरिभेदतः॥ वाचिस्थूलातथा सूक्ष्मा हृदयेकुण्डलीगता ॥ बीजरूपाचतुर्थीस्याद्व्यापिनीसर्वसाक्षिणी ॥ अस्यार्थः ॥ द्वितीयखण्डोक्तं स्थूलादिभेदमेव स्फोटयति वाचीति ॥ स्थूला वर्णावस्था वैखरीसंज्ञा वाचि तिष्ठति ॥ ततस्सूक्ष्मा मध्यमाख्या द्वितीयावस्थाहृदितिष्ठति ॥ तृतीया पश्यन्तीसंज्ञावस्था बीजरूपा कुंडलीगता बोध्या ॥ चतुर्थीत्ववस्था साक्षिरूपेण व्यापिकेत्यर्थः ॥ अकारादेरिति ॥ एवमकारादीनां प्रत्येकं चतुर्वि-

धत्त्वे तत्समुदायरूपप्रणवस्य षोडशा-
वयवत्वं बोध्यमित्यर्थः ॥ अथवाका-
रादीनां चतुर्विधत्वं प्लुतादिभेदैर्विज्ञे-
यं तत्रचतुर्थोभेदोऽविषयत्वात्साक्षि-
संज्ञ इत्यर्थः ॥८४॥ अकारादेरवस्थेय-
मेवं षोडशधास्मृता ॥ प्लुतदीर्घह्रस्व
साक्षि भेदैर्वापरिकीर्तिता ॥८५॥ आ-
त्मनोपिचपादास्स्यु श्चत्वारः परिकी-
र्तिताः ॥ विश्वश्चतैजसश्चैव प्राज्ञोपि-
चतुरीयकः ॥ ८६ ॥ अध्यात्ममधि-
दैवं च नामान्येतानितस्यहि ॥ विराड्-
हिरण्यगर्भेशा परमात्मानआत्मनः ८८
यथा च वाचकस्य प्रणवस्य षोडश-

भेदास्तथातद्वाच्यस्यात्मनोपि तान् दर्शयति॥ आत्मनोपिचेति द्वाभ्यां॥ स्थूलसूक्ष्मकारणोपहितरूपा विश्वादयस्त्रयस्तेषांसाक्षीचतुर्थाख्यएते चत्वारः प्रणवमात्राचतुष्टयेनाभिधेया आत्मनश्चत्वारः पादा अध्यात्मं बोध्याः॥ तथाधिदैवमप्यवस्थितस्य तस्य स्थूलाद्युपहितस्य साक्षिरूपस्य चात्मनोविराड्हिरण्यगर्भईशः परमात्माचेत्येतानि नामानि यथाक्रमं बोध्यानीतिद्वयोरर्थः॥ एकैकस्यचतुर्धात्वं भवेद्विश्वादिकस्यहि॥ तीव्रमध्यममंदाख्यैर्भेदैरैक्येन चात्मनः॥ ८९॥

T

एकैकस्येति ॥ एतेषां विश्वादीनामधि-
दैवरूपाणां भिन्नानां मध्ये एकैकस्य-
तीव्रादिभेदैश्चतुर्विधत्वंबोध्यम् ॥ त-
त्रैक्यं निर्विशेषत्वरूपं तुरीयत्वम् ॥
तथाहिजाग्रद्रूपोविश्वश्चतुर्विधः ॥ त-
त्रैंद्रियैर्विषयान्गृह्णंस्तीव्रोमनोरथपरो
मध्यो मोहेन तूष्णींभूतोमन्दः समाहि-
तस्तुनिर्विशेषतापन्नस्तुरीयः ॥ एत-
द्विश्वभेदचतुष्टयं क्रमेणाकारस्य वैश्व-
र्यादिसंज्ञावस्थाच तुष्टयस्यवाच्यम् ॥
एवंस्वप्नदृष्टरूपस्तैजसोपिचतुर्विधः ॥
तत्रस्वप्नेमंत्रादिकमबाधितं गृह्णंस्तीव्रः॥
स्वप्नंस्वप्नत्वेन जानन्मध्यमः ॥ स्वप्ने-

व्यामूढोमन्दः ॥ स्वप्नेसमाहितस्तुपू-
र्ववत्तुरीयइति ॥ तथाप्राज्ञोपि चतुर्वि-
धः ॥ तत्रसात्विकवृत्तिप्रधानस्तीव्रो-
राजसवृत्तिप्रधानोमध्यमस्तामसवृत्ति-
प्रधानो मन्दइति ॥ तुरीयभेदचतुष्ट-
यंतुस्वयमेवानन्तरमुदाह्रियतइति ॥
८७ ॥ ओतः सर्वगतःप्रोक्त आत्मास-
र्वशरीरिणाम् ॥ प्रपञ्चोपिचयेनायं ज्ञा-
यतेस्वात्मरूपतः ॥ स्थूलभेदस्तुरी-
यस्य तीव्रोयंकल्पितोद्विजैः ॥ ९० ॥
अनुज्ञाताभवेदेष ध्यातृध्यानादिभेद-
वान् ॥ मध्यमोत्रतुरीयस्य भेदःसर्वश-
रीरिणाम् ॥ ९१ ॥ अर्थः ॥ प्रणवस्यच-

तुर्यीमात्रा नादरूपा वर्णिता तस्या-
श्च वीजविंदुशक्तिशान्ताख्याश्चतस्रोव-
स्थाउक्ताः तासांक्रमेण वाच्याँस्तुरी-
यात्मनश्चतुरोभेदानोतादिसंज्ञांस्तीब्रा-
दिभावेनोदाहरति ओतइत्यादिना ॥
सर्वगतः अंगारेग्निवत्सर्वत्र विश्वशरी-
रघटकेषु स्थूलसूक्ष्मकारणेषु भासक-
तयानुगतोयस्सर्वेषामात्मा॥येनसकल-
स्थूलपर्यन्तः प्रपञ्चः स्वस्वरूपेण ज्ञा-
यते ॥ सआंतरव्याप्तत्वेन ओतसंज्ञो-
द्विजैर्वेदविद्भिस्तुरीयस्य स प्रथम स्ती-
ब्राख्योभेदउच्यतइत्यर्थः ॥१०॥ प्रपं-
चस्य स्वप्नवदध्यस्ततयाभाने ॥ अ-

ध्यस्तस्य स्वतःसत्ताविरहान्तस्यस-
त्तादिकमनुजानन् मदीयमेवसत्तादि-
कमस्यास्त्विवतिचिंतयतीतियावत् ॥
एवंविधआत्मा अनुज्ञातृसंज्ञस्तुरीय-
स्यद्वितीयोभेदइत्याह ॥ अनुज्ञाते
ति॥एषआत्माध्यातृध्यानादिभेदवान्
ध्यात्रादिभेदंस्वसत्ताप्रदानेन गृह्णन्नि-
तियावत्॥ सअनुज्ञातृनामा तुरीयस्य
मध्यमाख्योभेदउच्यतइत्यर्थः॥९१॥
अनुज्ञास्वात्मनोरूपं जानीते यत्रके-
वलम् ॥ तुरीयस्यतृतीयोयं भेदोमन्द-
इतीरितः ॥ ९२ ॥ अविकल्पश्चतुर्था-
ख्यो यत्रशून्यमिवाखिलं ॥ भातिवि-

श्चतथात्माच्च योगिनःपुण्यसंचयात् ॥ ९३ ॥ अर्थः ॥ अथाध्यस्तंसत्ताकर्षणेनाविलाप्यात्मानमद्वितीयंजानन्नात्मानुज्ञेत्युच्यते येनसर्वत्रसत्तादिकं दत्तंसइदानींअनुज्ञामात्ररूपेणावशिष्टः ॥ अनुज्ञायाविषयादिकमिदानीं नास्तीत्यत्रार्थे पर्यवसानात ॥ सआत्मातुरीयस्य तृतीयोभेद उच्यते मन्दाख्य-इत्याह अनुज्ञेति ॥ स्वात्मनोरूपं केवलंजानन्ननुज्ञासंज्ञआत्मा तद्रूपस्तुरीयभेदेषु तृतीयमन्दाख्योभेदइत्यर्थः॥ ९२॥ यत्रस्वरूपे बाधितद्वैतस्यस्मृतिरपिनास्ति तदात्मरूपं योगिना पुण्य-

संचयात् सकलप्रतिबन्धहीनेन लभ्यम् ॥ अविकल्पपदोक्तं तुरीयस्य चतुर्थभेदत्वेन ज्ञेयमित्याह अविकल्पइति चतुर्थाख्योभेदस्तुर्यस्याविकल्पसंज्ञः यत्राविकल्पेऽखिलंविश्वं शून्यमिवभातिनतुशून्यं यतआत्मैवभातियोगिनं पुण्यसंचयशालिनं प्रति ॥ ९३ ॥ तुरीयसुस्वरूपंतत्सदावस्थाचतुष्टये ॥ अनुस्यूतं विभात्येतद्रूपं यत्षोडशात्मकम् ॥ ९४ ॥ यस्मिन्नध्यस्तमखिलमिदंजगदुदीरितम् ॥ गगनेनिर्मलेभाति गन्धर्वनगरोपमम् ॥ ९५ ॥ एतत्सर्वभयैश्शून्यं जन्मादिपरिवर्जितम् ॥

अणोरणीयएतच्च महतोऽपिमहत्तथा ॥९६॥ एतज्जिज्ञासवस्सर्वे ब्राह्मणाद्या-श्शरीरिणः॥कुर्वन्तिविहितंकर्म निषिद्धंवर्जयन्तिच॥९७सत्यंतपोदयादानं-ब्रह्मचर्यमहिंसनम्।इत्यादीन्यपिकर्मा-णिकुर्वन्तिचविवेकिनः॥९८॥ब्राह्मणा-एतमिच्छन्ति एषणात्रयवर्जिताः॥ भिक्षाचर्यंचरंत्यत्र व्युत्थायाश्रमकर्म-तः॥ ९९॥ एतंविज्ञायविद्वांसो ह्यन्ध-वन्मूकवन्महीम्॥ विहरंत्यपिसर्वज्ञा अविज्ञाताजनैरिह ॥ सम्वर्तकादिव-त्सर्वे लोकातीतामहाधियइति॥१००॥ एवमर्थानुसन्धानपूर्वकं प्रणवंध्यायेत्॥

तद्यथा योहंसोऽसौयोऽसौसोऽहमित्यत्र सशब्देन परमात्मोच्यते ॥ अहंशब्देनप्रत्यगात्मोच्यते ॥अनयोस्सामानाधिकरण्यात ब्रह्मात्मैक्यमुच्यते। ततश्चसोऽहमित्यस्य परमात्माऽहमित्यर्थोयथातथाप्रणवस्यापि ॥ तथाहि सोऽहमित्यत्रसकारहकारयोर्लोपेकृते॥ परिशिष्टयोः ओअंइत्यनयोस्सान्धिकृत्वोच्चारणे ओं इतिशब्दोनिष्पन्नः॥ तदुक्तमभियुक्तैः ॥ सकारंच हकारं च लोपयित्वाप्रयोजयेत ॥ सन्धिचपूर्वरूपाख्यं ततोऽसौप्रणवोभवेदिति ॥ ततश्च ओंइत्यस्य परमात्माऽहंइत्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वथापि प्रणवजपप्रणवार्थानुसन्धाने-नेश्वरप्राणिधानेन परमेश्वराऽनुग्रहात्समाधिलाभोभवत्येव ॥ एवंसमाध्य-भ्यासेनांतःकरणस्यातिसूक्ष्मतापादनं मनोनाशइत्युच्यते ॥ ततःप्रारब्ध मात्रमुत्सृज्यागामिसंचितकर्मभिः सहसर्वाआपिवासनाःक्षीयन्ते ॥सकलप्रतिबन्धरहितं दृढविज्ञानं च जायते॥ ततोऽसौजीवन्मुक्तोविद्वान् कृतकृत्यो-भवतीति॥ तत्त्वज्ञानमनोनाशवासनाक्षयास्तत्साधनानीतिप्रसिद्धम् ॥ तथाचैवमेवोक्तंमुक्तिकोपनिषदि ॥ तथाहैनंश्रीरामचन्द्रंमारुतिः पप्रच्छ के-

यंवातात्सिद्धिः सिद्धयावाकिंप्रयोजन-
मित्यारभ्य जीवन्मुक्तिपदं त्यक्त्वे-
त्यन्तेन ग्रंथसंदर्भेण ॥ तथाहि द्विती-
याध्याये ॥ तथाहैनंश्रीरामचन्द्रंमारु-
तिःपप्रच्छ केयंवातात्सिद्धिः सिद्धया-
वाकिंप्रयोजनमिति ॥ सहोवाचश्रीरा-
मचन्द्रः ॥ पुरुषस्य कर्तृत्वभोक्तृत्व-
सुखदुःखाऽऽदिलक्षणाश्चित्तधर्मः क्ले-
शरूपत्वाद्बन्धोभवति ॥ तन्निरोधन
जीवन्मुक्तिः ॥ उपाधिविनिर्मुक्तघटा-
ऽऽकाशवत्प्रारब्धक्षयाद्विदेहमुक्तिः ॥
जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतो-
पनिषदः प्रमाणानि ॥ कर्तृत्वादिदुःख-

निवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनंभवति ॥ तत्पुरुषप्रयत्नसाध्यंभवति ॥ यथापुत्रकामेष्ट्यापुत्रं वाणिज्याऽऽदिनावित्तं ज्योतिष्टोमेनस्वर्गं तथा पुरुषप्रयत्नसाध्यवेदान्तश्रवणाऽऽदिजनितसमाधिना जीवन्मुक्तयादिलाभोभवति ॥ सर्ववासनाक्षयात्तल्लाभः॥ अत्रश्लोकाभवन्ति॥ उच्छास्त्रंशास्त्रितंचेति पौरुषंद्विविधंमतम् ॥ तत्रोच्छास्त्रमनर्थाय परमार्थायशास्त्रितम् ॥ १॥ लोकवासनयाजन्तो श्शास्त्रवासनयापिच॥ देहवासनयाज्ञानं यथावन्नैवजायते ॥२॥ द्विविधोवासनाव्यूह श्शुभश्चै

वाशुभश्चतौ॥वासनौघेनशुद्धेन तत्रचेदनुनीयसे॥ तत्क्रमेणाशुतेनैव मामकंपदमाप्नुहि ॥ अथचेदशुभोभावस्त्वांयोजयतिसङ्कटे ॥ ४ ॥ प्राक्तनस्तदसौयत्ना ज्जेतव्योभवताकपे ॥ शुभाऽशुभाभ्यांमार्गाभ्यां वहन्तीवासनासरित ॥ ५ ॥ पौरुषेणप्रयत्नेन योजनीयाशुभेपथि॥अशुभेषुसमाविष्टं शुभेष्वेवावतारयेत् ॥ ६ ॥ अशुभाच्चालितंयाति शुभंतस्मादपीतरत् ॥ पौरुषेणप्रयत्नेनलालयेच्चित्तबालकम् ॥ ७ ॥ द्रागभ्यासवशाद्याति यदातेवासनोदयम् ॥ तदाभ्यासस्यसा-

T

फल्यं विद्धित्वमरिमर्दन ॥ ८ ॥ सन्दि-
ग्धायामपिभृशं शुभामेवसमाचर ॥शु-
भायांवासनावृद्धौ नदोषायमरुत्सुत९
वासनाक्षयविज्ञान मनोनाशमहामते॥
समकालंचिराभ्यस्ता भवन्तिफलदा-
मताः ॥ १० ॥ त्रयएवंसमंयाव न्नाभ्य-
स्ताश्चपुनःपुनः ॥ तावन्नपदसम्प्राप्ति
र्भवत्यपिसमाशतैः ॥ ११ ॥ एकैकशो-
निषेव्यन्ते यद्येतेचिरमप्यलम् ॥ त-
न्नसिद्धिंप्रयच्छन्ति मन्त्रास्संकीर्तिता-
इव ॥ १२ ॥ जन्मान्तरशताभ्यस्ता
मिथ्यासंसारवासना ॥ साचिराभ्यास-
योगेन विनानक्षीयतेक्वचित् ॥ १४ ॥

तस्मात्सौम्यप्रयत्नेन पौरुषेणाविवेकि-
ना ॥ भोगेच्छांदूरतस्त्यक्त्वा त्रयमेव-
समाश्रय ॥ १५ ॥ तस्माद्वासनयायुक्तं
मनोवद्धंविदुर्बुधाः ॥ सम्यग्वासनया-
त्यक्तं मुक्तमित्यभिधीयते ॥ १६ ॥
मनोनिर्वासनीभावमाचराऽशुमहाक-
पे ॥ सम्यगालोचनात्सत्याद्वासना-
प्रविलीयते ॥ १७ ॥ वासनाविलये-
चेत श्शममायातिदीपवत् ॥ वासनां
सम्परित्यज्य मयिचिन्मात्रविग्रहे १८
यस्तिष्ठतिगतव्यग्र स्सोऽहंसच्चित्सु-
खात्मकः ॥ समाधिमथकर्माणि मा-
करोतुकरोतुवा ॥ १९ ॥ हृदयेनास्तस-

वैहो मुक्तएवोत्तमाशयः ॥ नैष्कर्म्यैण-
नतस्याऽर्थ स्तस्यार्थोऽस्तिनकर्मभिः
॥ २० ॥ नसमाधानजप्याभ्यां यस्यनि-
र्वासनंमनः ॥ संत्यक्तवासनान्मौना द्दृ-
तेनास्त्युत्तमंपदम् ॥ २१ ॥ वासनाहीन-
मप्येतच्चक्षुरादीन्द्रियंस्वतः ॥ प्रवर्त-
न्तेबाहिस्स्वार्थे वासनामात्रकारणम्
॥ २२ ॥ अयत्नोपनतेष्वाक्षि दृग्द्रव्येषु-
यथापुनः ॥ नीरागमेवपतति तद्वत्का-
र्येषुधीरधीः ॥ २३ ॥ भावसाम्वित्प्रकटि-
ता मनुरूपांचमारुते ॥ चित्तस्योत्प-
त्तींपरमां वासनांमुनयोविदुः ॥ २४ ॥
दृढाभ्यस्तपदार्थैक भावनादातिचञ्च-

लम् ॥ चित्तंसञ्जायतेजन्म जरामरण-
कारणम् ॥ २५ ॥ वासनाबशतः प्राण
स्पन्दस्तेनचवासना ॥ क्रियतेचित्त-
बीजस्य तेनबीजांऽकुरक्रमः ॥ २६ ॥
द्वेबीजेचित्तवृक्षस्य प्राणस्पन्दनवास-
ने ॥ एकस्मिंश्चतयोःक्षीणे क्षिप्रंद्वेअ-
पिनश्यतः ॥ २७ ॥ असङ्गव्यवहार-
त्वाद्भवभावनवर्जनात् ॥ शरीरनाश-
दर्शित्वाद्वासनानप्रवर्तते ॥ २८ ॥ वास-
नासम्परित्यागाच्चित्तंगच्छत्यचित्त-
ताम् ॥ अवासनत्वात्सततंयदानमनु-
तेमनः ॥ २९ ॥ अमनस्तातदोदेतिपर-
मोपशमःप्रदा ॥ अव्युत्पन्नमनोयावद्-

बानज्ञाततत्पदः ॥ ३० ॥ गुरुशास्त्रप्रमाणैश्चनिर्णीतंतावदाचर॥ततः पक्वकषायेणनूनंविज्ञातवस्तुना ॥ ३१ ॥ शुभोऽप्ययऽसौत्वयात्याज्योवासनौघोनिरोधिना ॥ द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूपएवच ॥ ३२ ॥ जीवन्मुक्तोसरूपःस्या दरूपोऽदेहमुक्तिगः ॥ अस्य नाशमिदानींत्वं पावनेशृणुसाऽऽदरम् ॥ ३३ ॥ चित्तनाशाऽभिधानंहि यदाते विद्यतेपुनः ॥ मैत्र्यादिभिर्गुणैर्युक्तं शान्तिमेतिनसंशयः ॥ ३४ ॥ भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्यतन्मनः ॥ सरूपोऽसौमनोनाशो जीवन्मुक्तस्यवि-

द्यते ॥ ३५ ॥ अरूपस्तुमनोनाशो वै-
देहीमुक्तिगोभवेत् ॥ सहस्रांकुरशाखा-
त्म फलपल्लवशालिनः ॥ ३६ ॥ अ-
स्यसंसारवृक्षस्य मनोमूलमिदंस्थि-
तम् ॥ सङ्कल्पएवतन्मन्ये सङ्कल्पोप-
शमेनतत् ॥ ३७ ॥ शोषयाऽऽशुयथा-
शोषमेतिसंसारपादपः ॥ उपायएक-
एवाऽस्ति मनसस्स्वस्यनिग्रहे ॥३८॥
मनसोऽभ्युदयोनाशो मनोनाशोमहो-
दयः ॥ ज्ञमनोनाशमभ्येति मनोऽज्ञ-
स्यहिश्शृङ्खला ॥ ३९ ॥ तावन्निशीव-
वेताला वल्गन्तिहृदिवासनाः ॥ एकत-
त्वदृढाभ्यासा द्यावन्नविजितंमनः ४०

प्रक्षीण चित्तदर्पस्य निगृहीतेन्द्रियद्वि-
षः ॥ पद्मिन्यइवहेमन्ते क्षीयन्तेभोग-
वासनाः ॥ ४१ ॥ हस्तंहस्तेनसम्पीड्य
दन्तैर्दन्तान्विचूर्ण्यच ॥ अङ्गान्यङ्गै-
स्समाक्रम्य जयेदादौस्वकंमनः ॥४२॥
उपाविश्योपाविश्यैकां चिन्तकेनमुहु-
र्मुहुः ॥ नशक्यतेमनोजेतुं विनायुक्ति-
मनिन्दिताम् ॥ ४३ ॥ अङ्कुशेनविना
मत्तो यथादुष्टमतङ्गजः ॥ अध्यात्म-
विद्याऽधिगम स्साधुसङ्गतिरेवच ॥४४॥
वासनासम्परित्यागः प्राणस्पन्दानिरो-
धनम् ॥ एतास्तायुक्तयः पुष्टा स्सन्ति-
चित्तजये किल ॥ ४५ ॥ सतीषुयुक्ति-

ष्वेतासु हठान्नियमयन्तिये ॥ चेतसो दीपमुत्सृज्य विचिन्वन्तितमोऽञ्जनैः । विमूढाः कर्त्तुमुद्युक्ता येहठाच्चेतसो-जयम् ॥ तेनिवध्नंतिनागेन्द्र मुन्मत्तं बिसतन्तुभिः ॥ ४७ ॥ द्वेबीजेचित्तवृक्षस्य वृत्तिव्रततिधारिणः ॥ एकंप्राण-परिस्पंदो द्वितीयंदृढभावना ॥ ४८ ॥ साहिसर्वगतासंविद्प्राणस्पन्देनचाल्यते ॥ चित्तैकाग्र्याद्यतोज्ञान मुक्तंसमुपजायते ॥ ४९ ॥ तत्साधनमतोध्यानं यथावदुपदिश्यते ॥ विलाप्यविकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् । ५० । परिशिष्टंचचिन्मात्रं चिदानन्दंविचि-

न्तय ॥ अपानेस्तं गतेप्राणो यवान्ना-
भ्युदितोहृदि ॥ ५१ ॥ तावत्साकुम्भ-
कावस्था योगिभिर्याऽनुभूयते ॥ वहि-
रस्तङ्गते प्राणे यावन्नाऽपानउद्गतः ॥
तावत्पूर्णांसमावस्थां वहिष्ठंकुम्भकंवि-
दुः ॥ ५२ ॥ ब्रह्माकारमनोवृत्ति प्रवाहो-
ऽहंकृतिंविना॥सम्प्रज्ञातसमाधिः स्या-
द् ध्यानाऽभ्यासप्रकर्षतः ॥ ५३॥ प्रशा-
न्तवृत्तिकंचित्तं परमानन्ददीपकम् ॥
असम्प्रज्ञातनामाऽयंसमाधिर्योगिनां-
प्रियः ॥ ५४ ॥ प्रभाशून्यंमनश्शून्यं
बुद्धिशून्यंचिदात्मकम्॥ अतद्व्यावृत्ति-
रूपोऽसौ समाधिर्मुनिभावितः ॥ ५५ ॥

ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णंशिवात्मकम् ॥ साक्षाद्विधिमुखोह्येष समाधिः पारमार्थिकः ॥ ५६ ॥ दृढभावनयात्यक्तं पूर्वापरविचारणम् ॥ यदाऽऽदानंपदार्थस्य वासनासाप्रकीर्तिता ॥ ५७ ॥ भावितंतीव्रसम्वेगादात्मनायत्तदेवसः ॥ भवत्याशुकपिश्रेष्ठ विगतेतरवासनः ५८ ॥ तादृग्रूपोहिपुरुषो वासनाविवशीकृतः॥सम्पश्यतियदैवतत्सद्वस्त्वितिविमुह्यति॥५९॥वासनावेगवैचित्र्यात्स्वरूपंनजहातितत्॥भ्रान्तंपश्यतिदुर्दृष्टि स्सर्वंमदवशादिव॥६०॥वासनाद्विविधाप्रोक्ता शुद्धाचमालिनातथा॥

मलिनाजन्महेतुस्स्याच्छुद्धाजन्मवि-
नाशिनी।६१।अज्ञानसुघनाकारा घना-
ऽहंकारशालिनी ॥ पुनर्जन्मकरीप्रोक्ता
मलिनावासनाबुधैः ॥ ६२॥ पुनर्जन्मा-
ऽङ्कुरंत्यक्त्वा स्थितासम्भृष्टबीजवत् ॥
देहार्थैधृयतेज्ञात ज्ञेयाशुद्धेतिचोच्यते
॥ ६३ ॥ बहुशास्त्रकथाकन्थारोमंथे-
नवृथैवाकिम् ॥ अन्वेष्टव्यंप्रयत्नेनमा
रुतेज्योतिरांतरम् ॥ ६३ ॥ दर्शना-
ऽदर्शनेहित्वा स्वयंकेवलरूपतः ॥ य-
आस्तेकपिशार्दूल ब्रह्मसब्रह्मवित्स्वय-
म् ॥ ६४ ॥ अधीत्यचतुरोवेदान् स-
र्वशास्त्राण्यनेकशः ॥ ब्रह्मतत्त्वंनजाना-

ति दर्वीपाकरसंयथा ॥ ६५ ॥ स्वदेहा-
ऽशुचिगन्धेन नविरज्येत यः पुमान् ॥
विरागकारणंतस्य किमन्यदुपादिश्यते
॥ ६६ ॥ अत्यन्तमालिनोदेहो देहीचा-
ऽत्यन्तनिर्मलः ॥ उभयोरन्तरंज्ञात्वा
कस्यशौचंविधीयते ॥ ६७ ॥ बद्धोहि-
वासनाबद्धो मोक्षःस्याद्वासनाक्षयः ॥
वासनांसम्परित्यज्य मोक्षार्थित्वम-
पित्यज ॥ ६८ ॥ मानसीर्वासनाःपूर्वं
त्यक्त्वाविषयवासनाः ॥ मैत्र्यादि-
वासनानाम्नी गृहाणाऽमलवासनाः॥६॥
ताअप्यतः परित्यज्य ताभिर्व्यवहर-
न्नपि ॥ अन्तः शान्तसमस्तेहो भव-

ॐ ॐ

चिन्मात्रवासनः ॥ ७० ॥ तामप्यथप-
रित्यज्य मनोबुद्धिसमन्विताम् ॥ शे-
षस्थिरसमाधानो मयित्वंभवमारुते॥
७१॥अशब्दमस्पर्शमरूपमव्ययं तथा
रसंनित्यमगन्धवच्चयत् ॥ अनाम-
गोत्रंममरूपमीदृशं भजस्व नित्यं
पवनात्मजाऽऽर्त्तिहम् ॥ ७२ ॥ दृशि-
स्वरूपंगगनोपमंपरं सकृद्विभातंत्व-
जमेकमक्षरम् ॥ अलेपकंसर्वगतंय-
दद्वयं तदेवचाहंसततंविमुक्तॐ ॥७३॥
दृशिस्तुशुद्धोऽहमविक्रियात्मको नमे-
ऽस्तिकश्चिद्विषयस्स्वभावतः॥ पुरस्ति-
रश्चोर्ध्वमधश्चसर्वतः सम्पूर्णभूमाह-

मितीहभावय ॥ ७४ ॥ अजोऽमरश्चै-
वतथाऽजरोऽमृत स्स्वयंप्रभस्सर्वगतो-
ऽहमव्ययः ॥ नकारणंकार्यमतीवनि-
र्मलस्सदैवतृप्तोऽहमितीहभावय ७५॥
जीवन्मुक्तपदंत्यक्त्वा स्वदेहेकालसा-
त्कृते ॥ विशत्यदेहकैवल्यम्पवनो-
स्पन्दतामिवेति ॥ ७६ ॥ एवंवसिष्ठे-
नापिवहुधाउपाख्यायते तथाहि श्री-
रामउवाच ॥ विवेकाऽभ्युदयाच्चित्तस्व-
रूपेऽन्तर्हितेमुने ॥ मैत्र्यादयोगुणाः
कुत्रजायन्तेयोगिनांवद ॥ १ ॥ वसिष्ठः ॥
द्विविधश्चित्तनाशोऽस्तिसरूपोऽरूपए-
वच ॥ जीवन्मुक्तौसरूपः स्यादरूपो-

देहमुक्तिगः ॥ २ ॥ प्राकृतंगुणसम्भारं-
ममेतिबहुमन्यते ॥ सुखदुःखाद्यवष्टब्धं-
विद्यमानंमनोविदुः ॥ ३ ॥ एतावन्मा-
त्रकंमन्ये रूपंचित्तस्यराघव ॥ यद्भा-
वनंवस्तुनोऽन्तर्वस्तुत्वेनरसेन च ॥ ४ ॥
यदा न भाव्यतेकिंचि द्धेयोपादेयरूपि-
यत् स्थीयतेसकलंत्यक्त्वातदाचित्तंन-
जायते ॥ ५ ॥ अवासनत्वात्सततंयदा-
नमनुतेमनः ॥ अमनस्तातदोदेति पर-
मोपशमःप्रदा ॥ ६ ॥ असंगव्यवहारि-
त्वाद्भवभावनवर्जनात् ॥ शरीरनाशद-
र्शित्वाद्वासनानप्रवर्तते ॥ ७ ॥ वासना
सम्परित्यागाच्चित्तंगच्छत्यचित्तताम् ॥
प्राणस्पन्दनिरोधाच्च यथेच्छसितथा-

कुरु ॥ ८ ॥ विपक्षेदोषः ॥ चित्तेन च दृ-
ढाक्रान्तं न मित्राणि न बान्धवाः ॥ शक्नु-
वन्ति परित्रातुं गुरवो न च मानवाः ॥ ९ ॥
सुखदुःखदशाधीरं साम्यान्न प्रोद्धरन्ति-
यम् ॥ निःश्वासा इव शैलेन्द्रं तस्य चित्तं
मृतं विदुः ॥ १० ॥ आपत्कार्पण्यमु-
त्साहो मदो मान्द्यं महोत्सवः ॥ यं नयन्ति
न वैरूप्यं तस्य नष्टं मनो विदुः ॥ ११ ॥
चित्तमाशाभिधानं हि यदा नश्यति राघ-
व ॥ मैत्र्यादिभिर्गुणैर्युक्तं तदा सत्वमुदे-
त्यलम् ॥ १२ ॥ भूयोजन्मविनिर्मुक्तं जी-
वन्मुक्तस्य तन्मनः ॥ सरूपोसौ मनोना-
शो जीवन्मुक्तस्य विद्यते ॥ १३ ॥ अरू-
पस्तु मनोनाशो यो मयोक्तो रघूद्वह ॥ वि-

देहमुक्तावेवासौविद्यतेनिष्कलात्मकः ॥ १४॥ समग्राग्र्यगुणाधार मपिसत्वं प्रलीयते॥ विदेहमुक्तावमले पदेपरमपावने ॥ १५ ॥ संज्ञान्तदुःखमजडात्मकमेकरूप मानन्दमन्थरमपेतरजस्तमोयत्॥आकाशकोशतनवोऽतनवोमहान्त स्तास्मिन्पदेगलितचित्तलवावसन्ति ॥ १६ ॥जीवन्मुक्तानमुह्यन्ति सुखदुःखरसास्थितौ। प्राकृतेनार्थकारेण किञ्चित्कुर्वन्तिवानवा। इत्यादिना॥तस्मात्सरूपोमनोनाशोजीवन्मुक्तिसाधनमितियावत्॥तदेवंपूर्वोक्ततत्त्वज्ञानवासनाक्षयमनोनाशाभ्यासाज्जीवन्मुक्तिः सिद्धयतीतिसिद्धम् ॥ तस्याः जीवन्मु-

क्तेः पञ्चप्रयोजनानिसन्ति ।। ज्ञानरक्षातपोविषम्वादाभावोदुःखनिवृत्तिःसुखाविर्भावश्चेति॥तत्रोत्पन्नब्रह्मसाक्षात्कारस्य पुंसः पुनःसंशयाविपर्ययादिप्रतिवन्धानुत्पत्तिर्ज्ञानरक्षानामप्रथमंप्रयोजनम् ॥ १ ॥ चित्तैकाग्रयंतपः मनसश्चेन्द्रियाणांच ह्यैकाग्रयंपरमंतपः तज्ज्यायःसर्वधर्मेभ्यः सधर्मःपरमुच्यते॥ इतिस्मृतेः॥ अस्यापिज्ञानोपयोगित्वेन लोकोपकारार्थत्वेन च प्रयोजनत्वम्॥ यद्यदाचरति श्रेष्ठ स्तत्तदेवेतराजनः ॥ सयत्प्रमाणंकुरुते लोकस्तदनुवर्तते ॥ इत्यादेरपिस्मरणात्॥ तपःद्वितीयंप्रयोजनम् ॥ २ ॥

जीवन्मुक्तस्य व्युत्थानदशायां कर्म-
ठापसदाद्यसत्कृन्निन्दादिश्रवणे पाखं-
डीकृतनिष्ठुरादिदर्शनादावपि चित्त-
वृत्तेरनुदयोऽविषंवादः तृतीयं॥३॥ दुः-
खनिवृत्तिर्द्विधा ऐहिकाऽऽमुष्मिक भे-
दात ॥तत्रज्ञानेन भ्रान्तिनिवृत्त्यायो-
गाऽभ्यासेना ऽखिलवृत्तिनिरोधेचित्त-
स्यात्मैकाकारतयैहिकसमस्तदुःखनि-
वृत्तिः ॥ प्रारब्धभोगेसत्यपीतियावत्॥
तथाचश्रुतिः आत्मानंचेद्विजानीया
दयमस्मीतिपूरुषः किमिच्छन्कस्य-
कामाय शरीरमनुसंज्वरेत ॥ इत्या-
दिनाऐहिकदुःखनिवृत्तिंमुक्तस्य दर्श-
यति ॥ ज्ञानेनाऽज्ञाननिवृत्त्या संचिता-

गामिकर्मणामश्लेषविनाशाभ्या मामुष्मिकदुःखानामपिनिवृत्तिः ॥ तथाच श्रुतिः ॥ एतंहवानतपति किमहंसाधुनाकरवं किमहंपापमकरव मित्यादिः ॥ योगिनः पापपुण्य निवृत्तिस्त्वेवमपिश्रूयते ॥ तस्यपुत्राद्दायमुपयान्ति-सुहृदःसाधुकृत्यांद्विषंतःपाप कृत्यामित्यादिना ॥ मुक्तस्य ज्ञानयोगाभ्यामज्ञानतत्कृतावरणविक्षेपानिवृत्त्या बाधकाभावात् ॥ परिपूर्णब्रह्मानन्दाऽनुभवः सुखाविर्भावः ॥ तथाचश्रुतिः ॥ समाधिनिर्धूतमलस्यचेतसो निवेशितस्यात्मनियत्सुखंभवेत् ॥ नशक्यतेवर्णयितुंतदागिरा स्वयंतदन्तःकरणेन-

गृह्यते ॥ इतिसुखाविर्भावोनामपञ्चमं प्रयोजनम् ॥ ५ ॥ एवंस्वरूपप्रमाण-साधन प्रयोजनानिरूपणैर्द्विविधामुक्ति-र्निरूपिता ॥ तस्माद्ब्रह्मविज्जीवन्मुक्तो भोगेनप्रारब्धे कर्माणि क्षीणे वर्तमान-शरीरपातेऽखण्डैकरसब्रह्मानन्दात्मना-वतिष्ठते ॥ न तस्य प्राणाह्युत्क्रामन्ति अत्रैव समवलीयन्ते ॥ब्रह्मैवसन्ब्रह्मा-प्येति ॥ ब्रह्मविद्ब्रह्मैवभवतीत्यादिसह-स्रशः श्रुतयोऽत्रमानम् ॥ तस्मादहंब्र-ह्मास्मीति तत्त्वमस्यादिमहावाक्यज-न्यज्ञानाद्ब्रह्मभावलक्षणो मोक्षो भवती-तिसिद्धम् ॥ ओं॥ येनात्मनाविलीयंते उद्भवान्तिचवृत्तयः ॥ नित्यावगतयेत-

स्मै नमोऽधिप्रत्ययात्मने ॥ १ ॥ श्रीपर-
मानन्दतीर्थानां गुरूणांचरणांबुजम् ॥
नमामिवाङ्मनःकायै रनन्यशरणै-
स्सदा ॥ २ ॥ न स्तौमि तंव्यासमशे-
षमर्थं समग्रसूत्रैरपियोववन्ध ॥ विना-
पि तैस्संग्रथिताऽखिलार्थं तंशंकरंनौ-
मिसुरेश्वरंच ॥ ३ ॥ ओंतत्सदितिश्री-
मत्परमहंसपारिव्राजकाचार्य श्रीपरमा-
नन्द तीर्थपूज्यपाद शिष्यश्रीविमला-
नन्दतीर्थ संगृहीते वेदान्तसिद्धान्तसा-
रसंग्रहे मुक्तिविवेक प्रकरणम् ॥

समाप्तश्चायंग्रंथः ।

